ह० रि
१

॥श्रीगणेशाय नमः॥ नित्यं निजानंदसंविद्द्वितीयं शुद्धं विभुं सत्यमतिस्वतंत्रं सूक्ष्मं निरस्ताखिलदृश्यमीशं प्रत्यं-
चमात्मानमहं भजामि १ शंकरं शंकराचार्यं केशवं बादरायणं सूत्रभाष्यकृतौ वंदे भगवंतौ पुनः पुनः २
सत्यज्ञानानंदात्मकमद्वितीयं ब्रह्मैव शुद्धसत्वप्रधानमायोपाधिकं सदीश्वरभावं मलिनसत्वप्रधानाविद्योपा-
धिकं सज्जीवभावं च जगाम जीवेशावाभासेन करोति मायाचाविद्याच स्वयमेव भवतीति तापनीयश्रवणात्
मायाप्रतिबिंब ईश्वरः तां मायां वशीकृत्य सर्वज्ञः सर्वशक्तिश्च जीवानां सर्वेषामभ्युदयापवर्गार्थं संकल्पमात्रेणै-
व लीलया जगतः सर्गस्थितिविलयानाचरति तत्र च ये जीवाः स्वाज्ञारूपश्रुतिस्मृत्युक्तमार्गानतिलंघनेन स्वा-
त्मानं भजंते तेषामनुग्रहायोपासनार्थं शंखचक्रगदाशूलमृगपरशुधरं नीलोत्पलदलकालमेघघृणैचं-
द्रस्फटिकसमानवर्णं आनंदघनं सर्वांगसुंदरं मूर्तिद्वयं शुद्धसत्वमयं च कृत्वा लीलास्पदं विष्णुशंकराख्यं स एवे-
श्वरो जग्राह तच्च मूर्तिद्वयं वैकुंठकैलासादिषु भक्तानां हृदये च नित्यं सन्निहितं वर्तते तत्र च भगवान् विष्णुः
फलत्यागपूर्वकं निरंतरानुष्ठितवेदानुवचनयज्ञदानतपोभिर्विमलीकृतस्वांतानां नित्यानित्यवस्तुविवेकेन तृ-
णीकृतब्रह्मलोकादिभोगानां शमदमादिमतां मुमुक्षूणां बहुविधस्वनिःश्वासभूतवेदार्थविचारासमर्थानां प्रमा-
णं मोक्षसाधनीभूतब्रह्मात्मतत्वबोधनाय व्यासेन श्रीभगवद्बादरायणरूपेणावतीर्य बहुविधन्यायोपेतैरध्या-
यचतुष्टयात्मकैर्ब्रह्मसूत्रैः सकलवेदांतवाक्यानि संग्रथयामास तानि च सूत्राण्यतिगंभीरार्थत्वाद्दुरवगमाभि-
प्रायाणि संति इदानीं कलौ दुष्टचित्तैर्भेदवादिभिः कैश्चिदन्यथान्यथा योजितानि पुरुषार्थपर्यवसायीनि न भू-

१

ह०रि० २

एत्वदर्शनादितिचेदुच्यते पृथिव्यप्तेजोवायवो विप्रतिपन्ना उत्पत्तिमंतः जपिवीत्वादेः महदुत्पन्नघटवद्
कौतोत्पन्नजलाद्युत्पन्नाग्निव्यजनपवनवदिति [illegible]कार्यत्व[illegible]मनुमा[illegible]दि[illegible]दे आकाशस्यापिभूत
त्वहेतुना कार्यत्वानुमानांतरं पृथिव्यादीनि सदुपादानानि तदुपरक्ततया प्रतीयमानत्वाद्यन्नियमेन यद्युप
रक्ततया प्रतीयते तत्तदुपादानं यथा घटादि मृदाद्युपादानमिति लाघवात् सर्वस्य जगतः एकसत्त्वकं तिकत्व
स्य ततएव अभिन्ननिमित्तोपादानकत्वस्यापि सिद्धिः संभवती परमतेच घटेश्वरसंयोगादेर्जीवात्मगत
ज्ञानादेश्च अभिन्नंनिमित्तोपादानत्वदर्शनात् ततश्चानुमानसिद्धमभिन्ननिमित्तोपादानत्वमनूद्य तस्य ब्र
ह्मत्वबोधनं श्रुत्या संभवति एवंच श्रुतेर्लक्षणपरत्वाभावेन अनुमानुसिद्धमभिन्ननिमित्तोपादानत्व
मनूद्य तस्य ब्रह्मत्वबोधनमात्रेण न वाक्यभेदप्रसंगः तस्यच ब्रह्मणः स्वरूपमानंदाद्येव रवल्विमानि
भूतानीतिवाक्येन निर्णीयते प्रमाणंच विष्णोः शास्त्रयोनित्वात् तंतु समन्वयादित्युक्तन्यायेन सर्ववेदां
ताः ततश्च लक्षणप्रमाणयोः सत्वेन विष्णोः लोचकरणप्रतिज्ञासंघटतीति नकिंदवद्यमितिभावः चि
ननु यद्यत्कारणं तत्तदन्यतोजन्यमिति व्याप्तेराकाशादौ दर्शनादाकाशादिकारणस्यापि विष्णोरन्यज
न्यत्वानुमाने नजन्यसर्वोपादाननिमित्तत्वलक्षणं तस्मिन्ननुपपन्नं स्यादित्याशंक्य असंभवस्तु सतोनु
पपत्तेरिति न्यायेन तस्याजन्यत्वमाह अनादिमिति आदिः कारणं नविद्यते यस्य सोनादिरजन्य इत्यर्थः
अयेभावः किं ब्रह्मणो जडं कारणं उत चेतनं नाद्यः जडस्याकाशादिवद्ब्रह्मकार्यत्वात् नापि द्वितीयः

Marginal notes (left): ४ कारणं हो; सिघवत् साहचर्यनियमात्; (right): ॥ आकाशस्य जन्यत्वमानतु प्रविदेहोविग्रहैरिति सैतस्मात्पूर्वपत्यादिदेव; वि; चि

यत्र२कार्यं तत्र२अन्यतोजन्यमिति साहचर्यनियमात् ६ प्राग्भूर्द्वमदृति निरर्थ सर्ववेदान्तप्रपंच

तुः अथभगवान्परमेश्वरः सर्वज्ञः शंकरः करुणयालोकानुग्रहार्थं स्वांशेनश्रीसर्वज्ञभगवत्पादशंकराचार्यरू
पेणब्रह्माद्यंशैः शिष्यभूतैः सहावतीर्य ब्रह्मसूत्रव्याख्यानरूपश्रीमच्छारीरकभाष्यकरणेनशकृच्छ्वणमा
त्रेणविद्यातिमिरतिरस्कारपटीयसोमुख्याधिकारिणः पुरुषधौरेयाननुजग्राह अथेदानींब्रह्मसूत्रार्थमीमां
सासमर्थानालसाननानायासेनकदितिब्रह्मतत्त्वसाक्षात्क्रियतोमंदाधिकारिणोनुगृहीतुकामः श्रीभगवान्भा
ष्यकारः तेषांब्रह्मतत्त्वंकरतलबिल्वफलीकारयितुंजपमात्रेणसकलपुरुषार्थसाधकंसर्ववेदांतसारभूतंश्र
वणमननिदिध्यासनात्मकंहरिस्तोत्रमारिप्सुश्चिकीर्षितंप्रतिजानीते स्तोष्येभक्त्याविष्णुमनादिंजगदादिं
यस्मिन्नेतत्संसृतिचक्रंभ्रमतीत्थं यस्मिन्दृष्टेनश्यतितत्संसृतिचक्रंतंसंसारध्वांतविनाशंहरिमीडे १
विष्णुंव्यापनशीलंत्रिविधपरिच्छेदशून्यंब्रह्मेत्यर्थः स्तोष्ये आरोपितसकलाधिष्ठानतयासर्वात्मकत्वेनानंत
कल्याणगुणतयावस्तुतोनिर्विशेषचिन्मात्रस्वरूपतयाचकीर्तयिष्यइतिप्रतिज्ञा ननु लक्षणप्रमाणाभ्यां
वस्तुसिद्धेः कीर्तनीयस्यविष्णोः किंलक्षणं किंप्रमाणमित्याशंक्य जगत्कारणत्वं यतोवाइमानिभूता
नीत्यादिश्रुत्युक्तंलक्षणमाह जगदादिमिति जगतः वियदादिसर्वप्रपंचस्य आदिंकारणंसकलजगदुपादा
नत्वेसतितत्कर्तृत्वमितिविवक्षितं तत्रश्चाव्याकृतप्रधानप्रमाण्वादौ तटस्थेश्वरेचनातिव्याप्तिः ननु अभि
न्ननिमित्तोपादानत्वंकुत्राप्य[2]प्रसिद्धंघटादिषुसर्वत्रउपादाननिमित्तयोर्भेदस्यैवदर्शनात्सर्वोपादानत्वमप्य
प्रसिद्धं मृत्तिकादेरेकैकोपादानत्वस्यैवदर्शनात् ततः कथमप्रसिद्धंलक्षणमुच्यते प्रसिद्धस्यैवलोकेलक्ष

[2] नोपलभ्यते

ह० रि० ३

अनुभूयमाने संसृतिचक्रे संसरत्यस्मा जीव इति संसृति अहंकारादिप्रपंचः एव चक्रं भ्रमति यत्र इमा विर्भवति रोभावाभ्यां च पुनः पुनरावर्तते इत्थं कर्तृत्वादिप्रकारेण अथवा संसृतिचक्रं अहंकारादिप्रपंचजातं कर्म जीवो भ्रमति भ्रास्या गृह्णाति स्यर्थः अयमभिसंधि आत्मा वा इदमेक एवाग्र आसीत सदेव सोम्येदमग्र आसीत् सत्यं ज्ञानमनंतं ब्रह्म कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति अन्यत्र धर्मादन्यत्राधर्मात् ब्रह्म ते ब्रवाणि यत्साक्षादपरोक्षाद्ब्रह्म योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद अथ योऽन्यां देवतामुपासते मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति यदा ह्येवैष एतस्मिन्नुदरमंतरं कुरुते अथ तस्य भयं भवति तत्त्वमसि अहं ब्रह्मास्मि अयमात्मा ब्रह्म तदेतद्ब्रह्मापूर्वमनंतरमबाह्यमित्याद्याः श्रुतयो हि उपक्रमोपसंहारादिभिर्लिंगैस्तत्परा सत्यः प्रत्यगात्मानमशनायाद्यतीतमपेत ब्रह्मत्वादिकं सच्चिदात्मकं निर्विशेषं ब्रह्म भेदनिंदापूर्वकं बोधयंति न च ता प्रत्यक्षादिभिर्बाधितुं शक्यं ते बहुविधलिंगोपेततया तत्परत्वेन प्रबलत्वात् किंतु ता एव प्रत्यक्षादितात्त्विकांशानुपजीवकत्वात् शुक्तिज्ञानवत् पश्चाद्भावित्वात् स्वप्रमेयबोधने प्रत्यक्षाद्यनुपजीव्य स्वप्रकाशचैतन्यविषयत्वात् अनुमानापेक्षया प्रत्यक्षवत् अव्यवहितं वस्तु विषयत्वाच्च प्रत्यक्षादिकं बाधित्वा तात्त्विकांशात् चाव्यावहारिकांशे व्यवस्थापयंति ततश्च तादृशे आत्मनि कर्त्रादिप्रपंचस्य परमार्थतोऽसंभवेन सोऽध्यस्त एव न च स्वप्रकाशस्याज्ञानविषयत्वाभावे नाधिष्ठानत्वायोगादध्यासत्वानुपपत्तिः

अभेदपरा सत्यः

श्रुतयः

जीव ब्रह्म एकत्व

स्वप्रकाशत्व बोधने

अनुमानस्य प्रत्यक्षापेक्षवत्    अनावृतप्रत्यकावरणता    अनाश्रितः

स्वस्यस्वकारणत्वानुपपत्तेः [illegible]तराभावाच्च सर्वे वा तस्यापि कारणत्वेनान्यजन्यत्वानुमानेन चेतनानवस्था
प्रसंगात् कस्यचिदजन्यत्वे वा तत्रैव कारणत्वहेतोर्व्यभिचारात् तस्यैव ब्रह्मत्वांगीकारात् सवा एष महानज
आत्मेत्यजन्यत्वप्रतिपादकश्रुतिविरोधाच्च न तस्यान्यजन्यत्वमिति जन्यसर्वोपादानानिमित्तत्वलक्षणमनु
पपन्नमिति नन्वेवमपि स्तोत्रारंभो न युज्यते तस्य विषयप्रयोजनयोरभावात् तथा हि प्रत्यगभिन्नं ब्रह्मै
व विषय इति भवताभिमानः स चानुपपन्नः कर्तृत्वभोक्तृत्वप्रमातृत्वेन प्रतीयमानस्य प्रतीचः तद्रहितब्र
ह्मणा भेदानुपपत्तेः ननु प्रतीच्यध्यस्ताहंकार एव कर्तृत्वादिनानुभूयते न तु प्रत्यगात्मेति चेत् न अध्यासका
रणाभावेन कर्तुरध्यस्तत्वानुपपत्तेः किं जडे वस्तुनि कर्तुरध्यासः उत स्वप्रकाशे नाद्यः कर्तुरभानप्रसंगात् भ
वन्मते जडस्य सर्वस्य अध्यस्तत्वेन अधिष्ठानत्वानुपपत्तेश्च न द्वितीयः स्वप्रकाशकस्य वस्तुनः अज्ञानवि
षयत्वाभावेनाधिष्ठानत्वायोगात् लोके अंशतोऽज्ञातस्यैव शुक्त्यादेरधिष्ठानत्वदर्शनात् अस्य च सांशत्वानंगी
काराच्च न हि प्रकाशमानस्याध्यस्तानविषयत्वं संभवति प्रकाशाप्रकाशयोर्विरोधात् मोहस्यादेर्विषयदोष
स्य स्वप्रकाशविषयप्रमितिरसंभवेन तत्करणप्रमाणदोषस्य चाभावाच्च तस्मान्न कर्तुरध्यास इति तस्यैवात्म
त्वात्तस्य बहुदोषवतो निर्दोषब्रह्मणाभेदायोगान्न विषयः संभवति प्रयोजनमपि न संभवति आत्मनि प्रती
यमानकर्तृत्वादेरनर्थस्यानिवृत्तेर्हि प्रयोजनमिति वक्तव्यं तस्योक्तप्रकारेण अनध्यस्तस्य ज्ञानान्निवृत्त्ययो
गादित्याशंक्य तदुभयं प्रतिपादयन् स्तुतिमारभ्यते यस्मिन्नित्यादिना यस्मिन्नज्ञाते विश्वो अधिष्ठाने एतत्

सिद्धान्तैकदेशिनोव चेन पूर्ववादि। आरोपितत्वेन ५

दृग्रूपस्यात्मनः

कर्तृत्वादि

स्वप्रकाशस्य चाकचिक्यादे

विषयप्रयोजन किंतु वास्तवमेव

विरोधादतएवनचतुर्थोपि … ऽप्रकारांतराभावान्नचप्रथमद्वितीयः
ज्ञानसाध्यत्वानुपपत्ते अज्ञाननिवृत्तेः

ह०रि०
४

निवृत्तेर्ज्ञानसाध्यत्वानुपपत्तेः नापितृतीयः असत्वेशशशृंगतुल्यायास्तस्याः साध्यत्वानुपपत्तेः पुरुषार्थ
त्वाभावप्रसंगाच्च नापितृतीयः विरोधात् उक्तपक्षद्वयदूषणापत्तेश्च नचतुर्थोपि सदसद्विलक्षणत्वेनाऽ
निर्वचनीयत्वेनतस्याः अज्ञानावस्थानप्रसंगात् अनिर्वचनीयाज्ञाननिवृत्तेरनिर्वचनीयत्वानुपपत्तेश्च
नहिघटनिवृत्तिर्घटोभवतितितश्चसर्वथाप्यनुपपत्तेः नाज्ञानस्यनिवृत्तिः संभवतीत्याशंक्य नतावदज्ञा
नस्यकल्पकाभावेनाकल्पिततयाज्ञाननिवृत्त्यसंभवः दीपादिवत्स्वस्यस्वपरनिर्वाहकत्वात् तस्यस्वप्रका अनास्था
च शेऽआत्मनिवस्तुतोऽसंभवेनकल्पितत्वस्यैववक्तुमुचितत्वात् अनृतेनहिप्रत्यूढाः इमेसत्याःकामाअनृ
तापिधानाः नासदासीन्नोसदासीदित्यादिश्रुतेश्च नाप्यनादिभावत्वेनतस्यनिवृत्त्यनुपपत्तिः अनादि
भावस्यानिवृत्तिरितिसमान्यव्याप्तेः ज्ञानेनाज्ञाननाशइतित्वऽनुभवसिद्धविशेषव्याप्तिर्विरोधेनतरति
शोकमात्मवित् भूयश्चांतेविश्वमायानिवृत्तिः निचाय्यतंमृत्युमुखात्प्रमुच्यते तेब्रह्मलोकेषुपरांतकाले भावत्वेन
इत्यादिश्रुत्याज्ञानेनतुतदज्ञानंयेषांनाशितमात्मनः मामेवयेप्रपद्यंतेमायामेतांतरंतितेअहमज्ञान रूपाद्यः
जंतमनाशयामितरत्यविद्यांविततांहृदियस्मिन्निविशते योगीमायाममेयायतस्मैज्ञानात्मनेनमः इ अस्त्वस्य
त्यादिस्मृत्याच अग्पानव्यतिरिक्तस्थलेसंकोचस्यैवोचितत्वात् तस्यास्त्वभिभावत्वानंगीकारात् अभाव अप्रमेया
विलक्षणत्वमात्रेणभावत्वव्यपदेशश्चेत्यभिप्रेत्याज्ञाननिवृत्तिः सद्रूपआत्माभिन्नाचेत्याह संसारध्वांत य
विनाशंहरिमिति संसारस्यकर्तृत्वादिरूपस्यकारणंयत् ध्वांतंअज्ञानंतस्यविनाशंनिवृत्तिंरूपंहरिंवृत्या

स्वप्रकाशआत्मनुनेव अज्ञानस्य

तस्माज्ज्ञानविषयत्वे सति अज्ञानावृतिः स्यात् तन्न ः

लोके घटमहं न जानामीति अज्ञानविशेषणतयाभासमानस्यैव तद्विषयत्वदर्शनात् स्वरूपचैतन्यस्य माम
हं न जानामीत्यज्ञानसाधकतया सिद्धिस्य तदविरोधित्वाद् वृत्त्यारूढस्यैव तस्य तद्विरोधित्वात् आत्मन्यारोपि
तांशभेदसत्वात् सादृश्यादेश्चात्मनि ब्राह्मण्याध्यारोपे संविदः नित्यत्वाध्यारोपे चादर्शनात् स्वप्रकाशस्य
च स्वयमेव स्वस्मिन् प्रमाणत्वेन तन्निष्ठाविद्यायाः प्रमाणदोषस्य सत्वाच्च ततश्च कर्तृत्वाध्यस्तत्वेन अना
त्मत्वादात्मनश्च कर्तृत्वादि साक्षिणा ब्रह्मत्वे बाधाभावात् प्रत्यगात्मैकविषयः संभवति इदं कर्तृत्वादेः अन
र्थस्यात्मन्यारोपितस्य समूलस्य निवृत्तिः प्रयोजनमपि संभवति इत्याह यस्मिन्नित्यादि इति यस्मिन् सदानंदचि
त्प्रकाशे परिपूर्णे शिवे ज्ञो हृष्टे शांत्यादिसहति निरंतरानुष्ठितश्रवणमनननिदिध्यासनैः सम्यक् साक्षात्कृ
ते तत्संसृतिचक्रं समूलं नश्यति लीयते तं हरिं ईडे इति संबंधः अत्र उभयत्र श्रुतिः यत्र हि द्वैतमिव भवति त
दितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादि ननु अहंकारादिप्रपंचमूलाज्ञानस्य नि
वृत्तिर्न संभवति तस्यानध्यस्तत्वात् स्वेनैव स्वस्याध्यासे आत्माश्रयात् अज्ञानांतरांगीकारे चानवस्थाप्रा
पतेः लोके अनध्यस्तस्य घटादेर्ज्ञानान्निवृत्त्यसंभवः किंच भावरूपाज्ञानस्यानादित्वान्निवृत्तिः न संभ
वति अनादिभावस्यात्मवन्नित्यत्वनियमात् प्रमाणनिष्ठश्यामतायाश्च अनादित्वसंभवादिमते अनंगी
कारात् किंच किमज्ञाननिवृत्तिः सती उतासती उत सदसती सदसद्विलक्षणा वा आद्ये आत्मनो भिन्ना उता
भिन्ना भिन्नाभिन्ना वा भिन्ना... न विलक्षणा वा नाद्यः द्वैतापत्तेः न द्वितीयः आत्मनोऽनादित्वेन अविद्या

विद्यमानत्वात्

साज्ञानस्य अलनः अज्ञानविषयदर्शनात्

द्द ज्ञानस्य निवाध्यारोपे कर्ता त

अविद्यावस्थायाः अध्यस्तत्वअसत्

ह०रि० तानि त्रिपादस्यामृतं दिवीति अस्यायमर्थः विश्वा भूतानि ब्रह्माण्डात्मकं सकलमिदं जगदेतियावत् अस्य ब्र
५ ह्मणः पादः अंश इत्यर्थः त्रिपाद् पादत्रयं अस्य ब्रह्मणः अमृतं मोक्षरूपं दिवि स्वप्रकाशात्मनि स्वरूपेणैव वर्त
ते न प्रपंचसंबंधस्तत्रास्तीत्यर्थः ब्रह्मणः प्रपंचसंबंधरहितप्रदेशः श्रीबादरायणेनापि सूचितः विकारावर्ति
च तथाहि स्थितिमाहेति विकाररूपेण वर्तमानं ब्रह्मणो भागत्रयमस्ति तथाहि स्थितिमवस्थानं ब्रह्मण आह
उक्तश्रुतिरितिसूत्रार्थः तथा च उक्तप्रकारे एव ब्रह्मणो जगदाकारेणावस्थानेपि न मुक्तप्राप्यस्थललाभा ब्रह्मण
वशंकेति भावः एवं जगदुत्पत्तिं परमात्मन उक्त्वा तस्य जगत्स्थितिहेतुत्वमप्याह येन पिनद्धमिति पुनः पृ
थक्त्वेन परमात्मना एतज्जगत् इत्थं वर्णाश्रमादिभेदेनापि नद्धं सुदृढं बद्धमित्यर्थः तथा च श्रुति एष सेतुर्वि
धरण एषां लोकानामसंभेदायेति अस्यायमर्थः एषः स वा एष महानज इत्युपक्रम्य सर्ववशित्वेन सर्वेश्व
रत्वेन च उक्तः प्रकृतः परमात्मा सेतुरिव सेतुः सेतुसाम्यमेवाह एषां लोकानां भूरादिभेदेन देवमनुष्यति
र्यगादिभेदेन वर्णाश्रमादिभेदेन च भिन्नानां भुवनानां भूतानां प्राणिनां चासंभेदाय असांकर्याय विधरणः
विधारयिता यथा लौकिकसेतुः क्षेत्रसंपदां तत्रत्यजलानां चासांकर्याय विधारयिता तद्वदिति येन व्याप्त
मिति येन चाधिष्ठानभूतेन सर्वं जगदाकाशेनेव व्याप्तं अंतर्बहिः पूर्णमित्यर्थः तथा च श्रुतिः यच्च किंचि
ज्जगत्सर्वं दृश्यते श्रूयतेपि वा अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इति सर्वव्यापकत्वे हेतुः नारायण
इति नरात् पुरुषात् उत्पन्नानि सर्वाणि जगंति नाराणि तेषां अयनं अधिष्ठानमित्यर्थः अन्यत्स्पष्टं

अथवा तस्याज्ञानस्याभिन्नभावेनाशीनाशात्

रूढं सत् अज्ञानविरोधि चैतन्यमित्यर्थः न चात्माभिन्नाया अज्ञाननिवृत्तेर्ज्ञानसाध्यत्वानुपपत्तिः यस्मि
न्सति यस्यात्मलाभः स तस्य संबंधः असति यस्मिन्यस्याभावः तत्तत्साध्यमिति साध्यलक्षणस्य ज्ञाने सति अ
ज्ञाननिवृत्तिरूपात्मनः अग्निमलक्षणसंबंधः ज्ञानाभावे अज्ञाननिवृत्त्यभावोऽज्ञानमिति अज्ञानानि
वृत्तिरूपात्मन्यपि सत्वोपपत्तेः भिन्नसत्ताकयोर्भावयोर्विरोधाभावाच्च नित्यसिद्धस्यापि ज्ञाननिवृ
त्तेः साध्यत्वभ्रांत्या वा पुरुषप्रवृत्त्युपपत्तेश्च प्रपंचोपशमं शिवमित्यादिश्रुत्या तस्यात्माभेदसिद्धेश्च एवं च
ज्ञाननिवृत्तिरूपप्रयोजनसंभवेन स्तोत्रारंभो युज्यत इति भावः ईडे स्तौमीत्यर्थः ननु ब्रह्मणः स्वस्मादन्यत्
जगदारभ्यते उत ब्रह्मैव जगज्जायते नाद्यः द्वैतापत्तेः एकस्य निरवयवस्यारंभकत्वानुपपत्तेश्च द्वितीये
तु ब्रह्म सर्वात्मना जगदाकारं भवति एकदेशेन वा नाद्यः मुक्तानां प्राप्यस्य तस्याभावप्रसंगात् निष्प्रपंचब्रह्म
ण एव मुक्तप्राप्यत्वात् न द्वितीयः ब्रह्मणो निरवयवत्वात् सावयवत्वे चानित्यत्वप्रसंगात् निष्कलमित्यादि
श्रुतिविरोधाच्चेत्याशंक्य निरंशेप्यंशमारोप्य कृत्स्नेंशेन वेति पृच्छतः तत्राद्ययोत्तरं ब्रूते श्रुतिः आनुहिते व पादोऽस्य
सीत्यादिन्यायेनोत्तरमाह यस्येति यस्यैकांशादित्थमशेषं जगदेतत् प्रादुर्भूतं येन पिनद्धं पुनरित्थं येन व्या
प्तं येन विबुद्धं सुखदुःखैस्तं संसारध्वांतविनाशं हरिमीडे २ यस्य परमात्मनः एकांशात् एकदेशतुल्यात्
मायावच्छिन्नात् इत्थं भोक्तृभोग्याकारेण तदनुभूयमानं जगत् प्रादुर्भूतमुत्पन्नमित्यर्थः ब्रह्मणो वस्तुतो नि
रवयवत्वेपि मायावच्छेदेन अनिर्वचनीयांशत्वात् एकदेशादेवेदं सकलं जगदुत्पन्नं तथा च श्रुतिः पादोऽस्य विश्वाभू

प्रकाशितं स्वस्वदुःखं विवर्शितं जगत्

सुखदुःखमोहात्मकस्य जगतः सुखदुःखमोहात्मकं कारणं भवतु मर्हति कस्मात्

ह०रि ६

र्थः ननु सर्गे पूर्वं कर्म नास्ति तदा विभागात् सर्वस्य ब्रह्ममात्रत्वादिति चेन्न संसारस्यानादित्वात् सूक्ष्मतया
फलदैस्थितिसंभवाच्चेति द्वितीयस्त्वर्थः तथा च ब्रह्मणो जगत्कारणत्वे न कोपि दोष इति ननु सुख
दुःखमोहात्मकस्य वियदादिप्रपंचस्य जडस्य सुखदुःखमोहात्मकं सत्वरजस्तमोगुणात्मकं जडं
प्रधानमेव कारणमनुमीयते चिन्मात्रस्य तु ब्रह्मणः ताहशजगत्कारणत्वानुपपत्तेः कार्यकारणयोर्वैल
क्षण्यानुपपत्तेः अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः जनयंतीं स्वरूपां इति श्रुतेः अजां अजन्यां
लोहितशुक्लकृष्णां रजःसत्वतमोरूपां स्वरूपां स्वसमानरूपां बह्वीः प्रजाः प्रकर्षेण जायन्त इति प्रजा
वियदादिप्रपंचस्तामित्यर्थः सर्वज्ञोइति सर्वज्ञो यो यश्च हि सर्वः सकलो यो यश्चानंतानंतगुणो यो गुण
संधामा यश्चाव्यक्तो व्यस्तसमस्तः सदसद्यः संसारध्वांतविनाशं हरिमीडे ३ यः सर्वज्ञः अत्र श्रुतिः यः
सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप इत्यादि सामान्यतः सर्वं जानातीति सर्वज्ञः विशेषेण सर्वं वेत्तीति सर्व
वित् यस्य ज्ञानमयं तपः ननु जीवानामिव कृच्छ्रचांद्रायणादिरूपमिति श्रुतिरर्थः प्रधानस्य जडत्वेन
विविधकर्मफलरूपविविधविन्यासदेहादिप्रपंचरचनानुपपत्तेः किंच सुखादेर्बाह्यघटादिधर्मत्वासि
द्धेरांतरत्वस्यैव प्रतीतेः अचेतनस्य स्वतो लोके प्रवृत्त्यदर्शनात् अजामित्यादिमंत्रस्य लोहितशुक्ल
कृष्णगुणवत्तेजोबन्नकारणपरमात्माध्यस्तव्याकृतविषयत्वान्न प्रधानं जगत्कारणं बादरायणेना
पि ईक्षतेर्नाशब्दं रचनानुपपत्तेश्च नानुमानं इत्यादिना प्रधानस्य जगत्कारणत्वं प्रत्ययोधित [illegible]

वृत्तिद्वारेण

कारणगुणाः कार्ये ऽनुसृताः तत्वात् [illegible]

ननु ब्रह्मणो जगत्कारणत्वं नयुज्यते वैषम्यनैर्घृण्यप्रसंगात् कांश्चित्सुखिनो देवादीन् कांश्चिद्दुःखिनस्ति
र्यगादीन् कांश्चिदुभयवतो मनुष्यांश्च सृजन्नीश्वरो विषमः स्यात् तथा प्रलयकाले अविशेषेण सर्वान्
जीवानुपसंहरन् निर्घृणश्च स्यादिति शंक्य तत्तत्प्राण्यनुष्ठितकर्मापेक्षयैवेश्वरस्य सृष्ट्यादौ प्रवृत्तेर्न वैष
म्याद्यापत्तिरित्यभिप्रेत्याह येन विशुद्धमिति सुखदुःखैः सुखं पुत्रदारादिलाभादिजन्या सत्त्वपरिणाम
रूपानुकूलचित्तवृत्तिः दुःखं रोगादिजन्या रजोविकाररूपा प्रतिकूलचित्तवृत्तिः तदुभयविशिष्टं सक
लं जगत् येन स्वप्रकाशचिद्रूपेण परमात्मना विशुद्धं प्रकाशितं इत्यर्थः अत्र च श्रुति तस्य भासा सर्व
मिदं विभाति इति तस्य सूर्यादेरिव यस्य ब्रह्मणः भासा स्वरूपचैतन्येनेत्यर्थः अयं भावः एष एव सा
धुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधु कर्म कारयति तं यमधो निनीषते एभ्यो
लोकेभ्यः नरकतिर्यगादिलोकेभ्य उन्निनीषते ऊर्ध्वं गंधर्वादिब्रह्मलोकान्तपदं नेतुमिच्छति अधः तिर्य
गादिस्थावरांतं नेतुमिच्छतीति इति श्रुत्या हि तत्तत्प्राण्यनुष्ठितकर्मापेक्षया तत्तत्फलप्रदातृत्वं बोध्यते न च पु
ण्यपापे च स्वेच्छया प्रवर्तयत ईश्वरस्य पुनश्च वैषम्याद्यापत्तिरिति वाच्यं पूर्वपूर्वकर्मापेक्षया तरोतर
स्मिन् प्रवर्तयतस्तदापत्त्यभावात् संसारस्य चानादित्वात् सूत्रकारेण च तस्यैव वैषम्याद्यभावः सूचितः वैष ब्रह्मणः
म्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति न कर्माविभागादिति चेन्नानादित्वात् ईश्वरस्यैव वैषम्यनैर्घृण्ये ना
नःसंभवतः सृष्ट्यादि प्राणिकर्मापेक्षत्वात् तथाहि एष ह्येवेत्युक्ता श्रुतिर्दर्शयति इति प्रथमसूत्रा

वैषम्यापत्तिरभावात्

ह०रि
७
प्रतिज्ञांदृष्टांतानुपरोधात् साक्षाच्चोभयाम्नानात् आत्मकृतेः परिणामात् पत्युरसामंजस्यात् इतीश्वरस्यप्र
कृत्यधिष्ठात् स्वरूपत्वंनिमित्तमात्रेश्वरस्याभावंचाह तत्राणमयमर्थः प्रकृतिरुपादानंच कारादधिष्ठाता
श्च ईश्वरएवंसतिप्रतिज्ञादृष्टांतयोरनुपरोधात् एकविज्ञानेनसर्वविज्ञानप्रतिज्ञायाः यथासोम्यैकेनमृत्पिंडेन
सर्वंमृन्मयंविज्ञातंस्यादितिप्रकृतिविषयदृष्टांतस्यचानुपरोधादुपपत्तेरितिसाक्षात् मुखतएववदुस्तं प्रजाए
कथनात् येत्युभयाम्नानात् प्रकृतित्वस्याधिष्ठातृत्वस्यचाम्नानादिति आत्मकृतेः तदात्मानंस्वयमकुरुतेति आत्मना
वजगदाकारेणकरणत्वश्रवणात् कथंकर्तृत्वेनपूर्वसिद्धस्यक्रियमाणत्वंतत्राह परिणामादि पूर्वसिद्धस्यापि
मायया विकारात्मनास्वात्मनः परिणामयितृत्वात पत्युर्निमित्तमात्रभूतेश्वरस्या सामंजस्यादनुपपत्तेरितिलोकदृष्ट
सामान्येनानुमितस्यलोकवदेवरागद्वेषादिप्रसक्त्याईश्वरत्वानुपपत्तिरिति ततश्चानिरीश्वराधिष्ठितंप्रधानम री
७ पिकारणमितिभावः ननुस्वप्रयोजनरहितेजगत्सर्जनादौप्रवृत्तस्येश्वरस्योन्मत्तवत्प्रेक्षाकारित्वाभावप्रसं उद्धमान
गात्स्वप्रयोजनोद्देशेनचप्रवृत्तस्यानित्यतृप्तत्वव्याहतेश्चनेश्वरोजगत्स्रष्टेत्याशंक्याह यश्चानंदइति निरंत
रमासभासमानानवच्छिन्नपरमानंदस्वरूपः आनंदोब्रह्मविज्ञानमानंदंब्रह्म एतस्यैवानंदस्यान्यानिभूता
निमात्रामुपजीवंतीत्यादिश्रुते राप्तकामस्येश्वरस्यप्राप्तव्यवस्वभावान्ननिस्पृहत्वहानिरित्यर्थः लोकेसा
र्वभौमादेःप्रेक्षाकारिणः प्रयोजनोद्देशंविनापिमृगयादौप्रवृत्तस्योन्मत्तत्वादर्शनात्प्राणिकर्मानुरोधेन
जगत्सर्जनादौप्रवृत्तेरीश्वरस्यस्वभावत्वात्स्वभावेच पर्यनुयोगाभावान्नोन्मत्तईश्वरः बादरायणोपि न
तात्कम
नप्रस
गात्
प्रयोजनाभावात्

प्रमूतं मत्वेयं उत्पद्येयं

दैक्षत बहु स्यां प्रजायेयेति श्रुत्या जगत्कारणस्य सतः ईक्षते रीक्षितृत्वश्रवणाद्दशब्दं शब्दागम्यं अनुमा
नगम्यं प्रधानं न कारणमिति प्रथमसूत्रार्थः अनुमीयते इत्यनुमानं प्रधानं कारणं न भवति तस्य जडत्वेन
रचनानुपपत्तेर्देहादिप्रपंचकर्तृत्वानुपपत्तेरिति द्वितीयसूत्रार्थः श्रुतिसिद्धसर्वज्ञस्य ब्रह्मणस्तत्संभव
तीति भावः यदुक्तं विलक्षणयोर्न कार्यकारणतेति तन्न ऊर्णनाभेस्तंतोर्गोमयाद्वृश्चिकादेः पुरुषात् केश
लोमादेश्च दर्शनादित्यभिप्रेत्याह यश्चहि सर्व इति सर्वं खल्विदं ब्रह्म इदं सर्वं यदयमात्मा इत्यादि श्रुतेः घटः
सन् घटः स्फुरतीति सर्वस्य प्रपंचस्य सत्वेन स्फुरणत्वेन च ब्रह्मसालक्षण्यानुभवात् यथोर्णनाभिः सृजते
गृह्णते च यथा पृथिव्यामोषधयः संभवंति यथा सतः पुरुषात्केशलोमानि तथाक्षरात्संभवतीह विश्वं इत्यादि
श्रुत्या विलक्षणकारणत्वे दृष्टांतप्रदर्शनाच्चेति भावः ननु अचेतनस्य प्रधानस्य स्वतः सृष्ट्यादिप्रवृत्त्यसंभवे
पि ईश्वराधिष्ठितस्य तस्य प्रवृत्त्या कारणत्वं भवत्विति योगानां सेश्वरसांख्यानां वा मतमाशंक्याह सकलो य इति स
कलः प्रकृतिरधिष्ठाता च स एवेत्यर्थः सोकामयत बहु स्यां प्रजायेयेति स्वस्यैव बहुभवनकामनादर्शनात् तदात्मानं ज्ञानेन ब्रह्म
स्वयमकुरुतेति स्वात्मनः जगद्रूपेण करणत्वश्रवणात् कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति ये
दृष्टेति नाश्रुतं श्रुतं भवति आत्मनि खल्वरे दृष्टे इदं सर्वं विज्ञातं भवति इत्यादि श्रुतेरेकविज्ञानेन सर्वविज्ञानप्रति
उपादानं ज्ञायाः प्रकृत्यधिष्ठात्रोर्भेदे प्रकृतिज्ञानेनाधिष्ठातृज्ञानासंभवेनानुपरोधप्रसंगात् श्रुत्यंसिद्ध तटस्थेश्व निरोध
रस्य लोकदृष्टसमान्यप्रसाधकेनानुमानेनासिद्ध्यसंभवाच्च स एव प्रकृतिरधिष्ठाता सृजकारेपि प्रकृतिश्च
अधिष्ठा ता निमित्तं सिद्धिसंभवात्

ह०रि
८

द्ग मायावी वकीमिति जगद्गृह्यत इत्याशंक्याह यश्चाव्यक्त इति अनीद्रियग्राह्यं इत्यर्थः अचिंत्यमव्यक्त
मित्यादिश्रुतेः अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगंधवच्च यदित्यादिश्रुत्याच रूपाद्यभावान्नेंद्रि
यग्राह्यः किंतु सच्छ्रुत्यैकगम्य इति भावः ननु ब्रह्मण एव सकलजगदाकारत्वे भोक्तृभोग्यविभागो न स्यात्स
र्वस्यापि ब्रह्मकारणकत्वाविशेषादित्याशंक्याह व्यस्तसमस्त इति व्यस्तो भोक्तृभोग्यरूपेण विभक्तोयः स
मस्तः प्रपंचस्तद्रूप इत्यर्थः लोके यथा समुद्रादेरेकस्यैव फेनतरंगबुद्बुदरूपेण विभक्तोनेकः [illegible]
[illegible] कार्यहेतुत्वं तद्वदेकस्यापि ब्रह्मणः विभक्तानेकरूपहेतुत्वं संभवति अतस्तं भोक्तृ
त्वापत्तेरविभागश्चेत्स्याल्लोकवदिति अस्य चायमर्थः भोक्तृभोग्यत्वापत्तेर्भोग्यस्य च भोक्तृत्वापत्तेरविभागः
विभागाभावः स्यादिति चेन्न लोकवत्समुद्रवत् विभागोपपत्तेरिति ततश्च ब्रह्मैव सर्वकारणमिति भावः
ब्रह्मण एव सत्यानृतभोग्यरूपेणावस्थानमाह सदसद्य इति सत् सत्यं असत् असत्यं सत्यं चानृतं च स
त्यमभवदिति श्रुतेः एकं सत् तत्यदं ब्रह्म परं अपरं व्यवहारिकं सत्यं वियदादि परं अनृतं शुक्तिरज
तादि २ ननु कार्यस्य स्वन्यूनपरिमाणद्रव्यारब्धं कार्यत्वात्पटादिवदित्यनुमानात्सर्वस्य कार्यस्य स्वन्यूनप
रिमाणद्रव्यारब्धत्वनियमात्परं परया परमाणव एव जगदुपादानं न तु ब्रह्म तस्य विभुत्यादित्याशंक्याह
यस्मादिति यस्मादन्यन्नास्त्यपि नैवं परमार्थदृश्यादन्यो नि(र्)विषयज्ञानमयत्वात् ज्ञातृज्ञानज्ञेयवि
हीनोपि सदानंदस्तं संसारध्वांतविनाशं हरिमीडे ४ यस्मात्सच्चिदानंदस्वरूपाद्ब्रह्मणो न्यत्परमाण्वादि

द्व

प्रयोजनवत्वादिति अनेन सूत्रेण प्रवृत्तेश्च लोके राजादिवदेवेश्वरस्यापि प्रयोजनवत्वादीश्वरस्य च तदभावा
त् न स स्रष्टेत्याशंक्य लोकवत्तु लीलाकैवल्यमित्यनेन लोके राजादिवदेवेश्वरस्यापि लीलायाः जगत्स
र्जनादिरूपायाः कैवल्यं प्रयोजनराहित्यमुपपद्यत इति समादधीत स्मादीश्वरः स्रष्टैवेति भावः ननु लोके कु
लालादेः स्रष्टुः शरीरस्य शक्तस्य घटादिप्रयोजनपरिज्ञानिनः वाह्यमृदाद्युपसंहारपूर्वकमेव सर्जने प्रवृ
त्तिदर्शनाद् दृष्टान्तेन च निर्विकल्पस्याशरीरं स्यात् एवासमर्थस्य स्रष्टृप्रयोजनापरिज्ञानिनः स्वव्यतिरिक्तपदा
र्थाभावेन वाह्यसाधनरहितस्य कथं स्रष्टृत्वमित्याशंक्याह अनंतगुण इति अनंताः असंख्याताः सर्वशक्तित्व
सर्वज्ञत्वादयो गुणधर्माय स्य सः तत्र हेतुमाह गुणधामेति शुद्धसत्वरूपा माया गुणधाम गृहं उपाधिर्यस्य
स इत्यर्थः वाह्यसाधनाभावेपि क्षीरादेर्दध्यादिहेतुत्वदर्शनाद्देवानां योगिनां च वाह्यसाधनं विना पुरादेर्योगम
हिम्ना सर्गादिदर्शनादस्माकं च शरीरांतरं विनापि शरीराधिष्ठातृत्वदर्शनात् परास्य शक्तिर्विविधैव श्रूयते
मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरमित्यादावीश्वरस्य सर्वसाधनपेक्षीयसाः मायाशक्तेः श्रवणा
त् स्वशरीराकारेणोपसंहारदर्शनान्नेति चेत् क्षीरवद्धि देवादिदृष्टिर्लोके सर्वधर्मोपपत्तेश्चेति सूत्रे कुलाला
देर्मृदाद्युपसंहारदर्शनादीश्वरस्य च वाह्यसाधनोपसंहाराभावान्न स स्रष्टेत्याशंक्य वाह्यसाधनाभावेपि क्षीर
स्य दधिहेतुत्ववत् लोके देवादिवच्च प्रपंचहेतुत्वोपपत्तेर्मायावशादेव सर्वेषां सर्वकर्तृत्वादिधर्माणामुपपत्ते
श्च न कोपि दोष इति समाधानाच्चाशरीरस्यापि तस्य मायागुणवशादेव सर्वमुपपद्यत इति भावः ननु तर्हि प्रसि

ह० रि पतेः तयोरभेदमेव संभावयति तथा सर्वेषु पुरुषोत्तर समयः यदङ्गे रोहितं रूपमित्याद्याः तत्त्वंपदार्थशो
२५ धनरूपाः श्रुतयः जीवेश्वरोभयगतविरुद्धधर्मनिरासद्वारा तयोरैक्यमेव संभावयंति तथा ब्रह्मविदाप्नोति
म परमितः समभवदित्याद्याश्चाभेदज्ञानस्य निरतिशयफलप्रदर्शनेनाभेदस्यैव वक्तृत्वं ज्ञापयंत्यस्तमे
वसंभावयंति इत्थं सृष्टिस्थितिलयप्रवेशसंयमनतत्त्वंपदार्थफलप्रतिपादकैः सह विधार्थवादैरनुगृहीतं
सन्महावाक्यमवांतरवाक्यसहितं यत्तत्त्वं प्रतिपादयति तदिदानीं स्तौति सर्वमिति सर्वं दृष्ट्वात्मनि युक्त्या
जगदेतत् दृष्ट्वात्मानं चैवमजं सर्वजनेषु सर्वात्मैकोस्मीति विदुर्यं जनहृत्स्थं तं संसारध्वांतविनाशं हरि
मीडे १३ सर्वं वियदादिकं जगत् एतत् अनुभूयमानं स्वात्मनि स्वस्मिन् युक्त्या जडस्य दृश्यस्य धर्मांतरे कांदृ
प्रतीती णाभावयोगात् दृग्दृश्ययोश्च संयोगादेरसंभवात् विषयविषयीभावस्य संयोगादिमूलसंबंधपू
र्वकत्वात् सर्वस्य वियदादिजडप्रपंचस्य भानान्यथानुपपत्त्या चित्यध्यस्तत्वमेव संबंध इत्यादियुक्त्या
दृष्ट्वा सर्वं जगत्स्वस्मिन्कल्पितत्वेन ज्ञात्वेत्यर्थः पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं
विचित्रमिति श्रुतेः पुरत्रये जाग्रदाद्यवस्थात्रय इत्यर्थः अजं जनिरहितमपरोक्षतयानुभूयमा
नमात्मानं च सर्वजनेषु जनिमत्सु अंतःकरणाद्युपाधिमत्सु प्रतिबिंबतया वर्तमानं दृष्ट्वा योयोनिं आत्मानं
योनिमधितिष्ठत्येकः इंद्रो मायाभिः पुरुरूप ईयते अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो
बभूव एकस्तथा सर्वभूतांतरात्मा रूपं रूपं प्रतिरूपो बहिश्चेत्यादिश्रुतेः योनिमायादिशब्दाः अंतःक

द्देशोर्ज्जुनतिष्ठति भ्रामयन्सर्वभूतानि यंत्रारूढानि मायया इति स्मृतेश्च १३ सर्वे हि वेदांताः ब्रह्मणो द्वि

तीयत्वं प्रत्यगात्मनस्तद्रूपत्वं च बोधयंति अथैतरेयश्रुतिः तावदात्मा वा इदमेक एवाग्र आसीदित्यवांतरवाक्ये

न ब्रह्माद्वितीयत्वमुक्त्वा प्रत्यगात्मनोऽद्वितीयब्रह्मत्वं महावाक्येन बोधयति प्रज्ञाप्रतिष्ठा प्रज्ञानं ब्रह्मेति ते युजर्वेद

त्ति तिरीयकश्रुतिश्च सत्यं ज्ञानमनंतं ब्रह्मेत्यवांतरवाक्येनाद्वितीयं ब्रह्मोक्त्वा स यश्चायं पुरुषे यश्चासावादित्ये स ए

क इत्यनेन महावाक्येन प्रतीचस्तादृक् ब्रह्मत्वं बोधयति तथा छांदोग्यश्रुतिश्च सदेव सोम्येदमग्र आसी

अ... देकमेवाद्वितीयमित्यनेन तादृशं ब्रह्मोक्त्वा तत्त्वमसीत्यनेन महावचसा जीवब्रह्मणोरभेदो बोध्यते एवं

च प्रतिवेदांतं तत्र तत्र द्रष्टव्यं ननु तत्र कथं ब्रह्मणो द्वितीयत्वमाकाशादेर्द्वितीयस्य विद्यमानत्वात्कथं प्र

तीचो ब्रह्मत्वं तयोर्भेदस्यैवानुभवादित्याशंकायां स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत तस्मा

द्वा एतस्मादात्मन आकाशः संभूतः तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजतेत्याद्याः सृष्ट्याद्यर्थवा

दरूपाः श्रुतयः आकाशादेः सर्वस्य जगतो ब्रह्मण एवोत्पत्तेस्तस्मिन्नेवावस्थानात्पुनस्तत्रैव लयात्तदु

त्पत्तिस्थितिलयकस्य घटादेर्मृद्भेदवत्कारणब्रह्ममात्रतयावांतरवाक्यैर्ब्रह्मणो द्वितीयत्वं संभावयामा

सुः तथा स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत तत्सृष्ट्वा तदेवानुप्राविशदनेन जीवेनात्मनानुप्रविश्य

इत्याद्याः श्रुतयो ब्रह्मण एव जीवरूपेण प्रवेशं ब्रुवंति न तु बहिःस्थितस्यांतरगृहे प्रविष्टदेवदत्तवज्जीव

ब्रह्मणोरभेदं महावाक्यप्रतिपाद्यं संभावयंति तथा नियमनश्रुतिश्चात्यंतभेदे नियम्यनियामकभावानुप

ह०रि
१६

मायाप्रतिबिंबितयाईश्वरः सन्सर्वेषांकर्मफलंददातीत्याह कर्माध्यक्ष इति कर्मणांपुण्यपापरूपाणाम
ध्यक्षः अधिष्ठाय फलदातेत्यर्थः जडप्रतियोगिकभेदं वारयति सर्वभूताधिवासः इति सर्वेषां पृथिव्या
दीनांभूतानामधिवासः अधिष्ठानमित्यर्थः आरोपितस्याधिष्ठानातिरेकात् न तद्विरूपितोभेद इत्य
र्थः जीवेश्वररूपेणावस्थानात्प्राप्तं पुण्यादिकर्तृत्वं जगत्स्रष्टृत्वादिकंच वारयति साक्षीति स्वसंनि
धौप्रवर्तमानकार्यकारणदेहजगदाकार परिणामिन्या अविद्यायाश्च साक्षी साक्षाद्द्रष्टा साक्षि
त्वे हेतुमाह चेतेति चेतन्यरूप इत्यर्थः वस्तुतः साक्षित्वादिराहित्यमाह केवल इति सकलविशेष
शून्य इत्यर्थः ज्ञानानंदयोर्गुणत्वं केचिद्वांछंति तान्निवारयति निर्गुण इति विज्ञानमानंदं ब्रह्मेतिश्रु
तेः ज्ञानानंदौ स्वरूपमेवेत्यर्थः द्वासुपर्णा सुपर्णाविव सुपर्णौ सयुजौ नित्यसंयुक्तौ सखायौ चि

२०

द्रूपौ अंतःकरणोपहितानुपहितौ समानं वृक्षं वृश्च्यते तत्त्वज्ञानेन समूलमुच्छिद्यत इति वृक्षः कार्य
कारणोपाधिः तं परिषस्वजाते आश्रयेते यथा लौकिकौ सुपर्णौ पक्षिसंखायौ एकमश्वत्थादिवृक्षमा
श्रयेते तद्वत्तयोर्मध्ये अन्य एकः पिप्पलं कर्मफलं स्वादुरसवत् उपलक्षणमेतत् सुखदुःखरूपमि
त्यर्थः अत्ति कर्तृत्वादिरूपकार्यकारणाविवेकाद्भुंक्ते अन्यः कार्यकारणाद्विविक्तः अभिचाकशीति
कर्तृत्वभोक्तृत्वरूपंकार्यकारणं केवलं पश्यतीत्यर्थः एवमेताभ्यामविद्यावस्थायां कर्तृत्वादिरूप
त्वेन स्वतः साक्षीभूतस्य चिन्मात्रत्वेन प्रतिपादितं विष्णुस्तौति सर्वचेति सर्वेंद्रियैः पश्यति जिघ्रत्यथ

मिति सप्तमो ध्यायः ६

रणा मृषाधिपरा इंद्रः परमेश्वरः पुरुरूपः देवतिर्यगाद्यनेकरूपः इयते गम्यते प्रतिरूपः समानरूपः इ
तरत्सरूपं सर्वात्मा सर्वेशां वियदादीनामधिष्ठातृत्वेन स्वस्यैव सर्वशरीरेषु जीवतया प्रविष्टत्वेन च सर्वा
त्मा सर्वरूपः अत एकोऽस्मीति यमद्वितीयं जनद्धृत्स्थं जना नो हृदि [illegible] स्थितं नित्या परो [illegible] मित्यर्थः
यस्मान्नादपरो नाद्गुरो नित्यक्ते साक्षाद्धृत्व्यवधानं विना अपरो नादपरो [illegible] मित्यर्थः अत्र च श्रुति
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि संपश्यन् ब्रह्म परमं याति नान्येन हेतुना मय्येव सकलं
जातं मयि सर्वं प्रतिष्ठितं मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहं ॥ १२ एको देवः सर्वभूतेषु गूढः सर्वव्या
पी सर्वभूतान्तरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च द्वा सुपर्णा सयुजा
सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीतीमौ मंत्रावात्म
नो विद्यया कर्तृत्वादिकं परमार्थतस्त्वद्राहित्यं च बोधयतः अनयोश्चैवमर्थः पुराणप्रसिद्धं ब्रह्मवि
ष्णुरुद्राणां भेदं वारयति एक इति देवः स्वप्रकाशचिद्रूपः सकलेत्याकाङ्क्षायामाह सर्वभूतेषु क्षितिब्र
ह्मादिस्तंबान्तेषु तर्हि किमिति नानुभूयत इत्यत आह गूढ इति अज्ञानेनावृतत्वान्न सामान्यप्रज्ञैर
नुभूयत इत्यर्थः तस्य त्रिविधपरिच्छेदराहित्यमाह सर्वव्यापीति देशकालौ जीवेश्वरौ जगदित्येतत्सर्वं व्या
प्तुमस्यालं शीलमस्येति सर्वव्यापी तदेव प्रतिपादयन् प्रथमं चेतनप्रतियोगिकभेदाभावमाह सर्वभूतान्त
रात्मेति चैतन्यमेकमेव सर्वेषु ब्रह्मादिस्थावरान्तेषु प्रविश्यान्तर्जीवात्मतया वर्त्तत इत्यर्थः तदेव [illegible]

रद्वैतचेतनान्तरं
ति

ह०रि
९७

यथा लोके तन्तो वास्यादिकरणहस्तः कर्ता दुःखी भवतीति स एव विमुक्तवास्यादिकरणः स्वस्थः सुखी
भवति एवमविद्याप्रत्युपस्थापितकार्यकरणोपाधिक आत्मा स्वप्नजागरितयोः कर्ता दुःखी भव
ति स तच्छ्रमापनुतये स्वात्मानं परं प्रविश्य विमुक्तकार्यकारणसंघातोऽकर्ता सुखी भवति कर्तृत्व
स्यैवौपाधिकत्वोक्तेः औपाधिकस्य च सत्यत्वानुपपत्तेः अनुभवस्य च तत्परश्रुतिविरोधेन भ्रांति
त्वात्कार्यकरणोपाधिकृतं भ्रांतमेवात्मनः कर्तृत्वादि न पारमार्थिकमित्यभिप्रेत्याह पश्यन्निति प
श्यन् शृण्वन्नविजानन् रसयन्सन् जिघ्रन्बिभ्रद्देहमिमं जीवतयेत्थं इत्यात्मानं यं विदुरीशं विष
यज्ञं तं संसारध्वांतविनाशं हरिमीडे ९५ इमं देहं कार्यकरणसंघातं जीवतया प्रविश्य बिभ्रत् आत्मा
इत्थं चक्षुरुपाधिना पश्यन्भवति तथा श्रोत्रोपाधिना शृण्वन् शब्दग्राहकः तथा विजानन् बुद्ध्यु
पाधिना निश्चिन्वन् तथा रसनेन रसयन् रसं गृह्णन् तथा घ्राणेन गंधं जिघ्रन्भवति न तु स्वतः तथा च श्रुतिः
आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इति अस्यायमर्थः आत्मशब्देन बुद्धिरुच्यते बुद्ध्याद्युपाधि
युक्तमात्मानं कर्ता भोक्तेत्याहुः अथवा आत्मा जीव इंद्रियमनोयुक्तं प्रथमार्थे द्वितीया छांदसी इंद्रियादि
युक्तः सन्भोक्तेति एवं विषयज्ञमात्मानं ईशमेव विदुः स्वेन वास्तवरूपेण तमिति अर्थः ९५ मांडूक्ये श्रूय
ते सोऽयमात्मा चतुष्पाज्जागरितस्थाने बहिःप्रज्ञः सप्तांग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः
प्रथमः पादः स्वप्नस्थानोंऽतःप्रज्ञः सप्तांग एकोनविंशतिमुखः प्रविविक्तभुक्तैजसो द्वितीयः पादः २

कर्तृत्वादि
रूपस्य
अकर्तृ
तःश्रुति
विरोधात्

२२

प्रतिमानं

पश्यंभुंक्ते स्पृशञ् श्रोता बुध्यतीत्येवमाहुरिमं यम् साक्षी चास्ते कर्तृषु पश्यन्निति चान्ये तं संसारध्वांतविनाशं हरि
मीडे १४ सर्वत्र ब्रह्मादिस्थावरांतेषु कार्यकारणसंघातेषु प्रविष्टो वस्तुत एक एव सन्नपि बहुधा प्रविभक्तः
पश्यति दर्शनव्यापारं करोति जिघ्रति घ्राणेन गंधं गृह्णाति भुंक्ते भोजनं करोति स्पृशति त्वचा शीतउ
ष्णं वेत्ति श्रोता श्रोत्रेण शब्दं गृह्णाति बुध्यति केवलमंतःस्थया बुद्ध्या भूतं भावि च जानाति चकारो
नुक्तसकलेंद्रियव्यापारसमुच्चयार्थः इति एवं बहुव्यापारवत्वेन यं इमं अपरोक्षतया अनुभूयमानमवि
द्याग्रस्तामाहुः अन्ये विवेकिनः वास्तवस्वरूपप्रतिपादकमंत्रा वा कर्तृषु कार्यकारणोपाधिषु स्वव्यापारे
प्रवर्तमानेषु पश्यन् कर्तृणि कार्यकारणानि पश्यन् आसमंतात् साक्षी केवलमास्ते परमार्थतो न किंचिद
पि करोतीति इति च यमाहुः तमित्यर्थः तदुक्तं वासिष्ठरामायणे कुर्वन्नपीह जगतां महतामनंतं वृंदं न
किंचन करोति कदाचनापि स्वात्मन्यनस्तमयसंविदि निर्विकल्पे त्यक्तोदयस्थितिमुदेति स्थित एक एवे
ति १५ ननु एवमात्मनः कर्तृत्वादिरूपत्वे तद्रहितत्वोभयप्रतिपादकश्रुतिस्मृतिषु सतीषु अन्यतरमि
थ्यात्वं किमित्यंगीक्रियते स्वाभाविकत्वोपाधिकत्वाभ्यामुभयोरपि वास्तवत्वोपपत्तेः अन्यतरमिथ्यात्वे वा
अकर्तृत्वादेरेव मिथ्यात्वं किं न स्यादित्याशंक्य स्वतोविरुद्धद्वयोस्याप्याधिनेप्येकत्रघटनासंभवात् स्फटि
के औपाधिकरक्तिम्नो वास्तवत्वादर्शनात् कर्तृत्वादेर्वास्तवत्वे च सुषुप्तादावपि तत्प्रसंगात् कर्तृत्वाद
रेव कार्यकारणान्वयव्यतिरेकानुविधानदर्शनात् स्वप्रकारेणापि यथावत्तन्नोभययेत्यनेनसूत्रेण

इ०रि
१८

तः प्रज्ञानघन एव न विप्रकीर्णप्रज्ञान आनंदमयः आनंदप्रचुरः दुःखहेतुलिंगस्योपरमात् आ
नंदस्वरूपानंदमेव भुंक्ते इति तथा आनंदभोगे साधनमाह चेतोमुख इति चेतश्चित्ज्ञप्तिर्विवसहिताज्ञा
नवृत्तिरेव मुखं चानंदभोजने द्वारं यस्य तथा प्राज्ञः प्रकर्षेणांतर्बहिर्न जानातीति तथा एवं तृतीयापादः
अवस्थात्रयानुस्यूतं शुद्धचैतन्यमेव चतुर्थपादमाह अदृश्यमित्यादिना अदृश्यं ज्ञानेंद्रियाविषयं अ
व्यवहार्यं हानादिव्यवहारागोचरं अग्राह्यं कर्मेंद्रियाविषयं अलक्षणं लिंगं तद्रहितं अनुमानाविष
यमित्यर्थः अचिंत्यं अंतःकरणागोचरं अव्यपदेश्यं शब्दाविषयं तत्प्रवृत्तिनिमित्तजात्यादेरभावात् किं
त्वेकात्मप्रत्ययसारं एकोऽद्वितीय आत्मस्वरूपं अतः प्रत्ययप्रकाश एव सारो वलं स्वसद्भावे प्रमाणं यस्य
स तथा प्रपंचोपशमं प्रपंचनिवृत्तिरूपं आरोपिताभावस्याधिष्ठानाभिन्नत्वात् शिवमानंदरूपमद्वै
तं द्वैतरहितं ब्रह्मैव चतुर्थपादं मन्यंते विद्वांस इति एवमन्यत्र कैवल्योपनिषदादावपि आत्मौ विद्ययावस्था
त्वे स्वतस्तद्रहितत्वं श्रुतं तात्र शंकते सिद्धं विष्णुमिदानीं स्तौति जाग्रदिति जाग्रद्दृष्ट्वा स्थूलपदार्थान
यमायां दृष्ट्वा स्वप्ने यापि सुषुप्ते सुरतनिंद्रा इत्यात्मानं वीक्ष्य मुदास्ते चतुरीयं तं संसारध्वांतवीनाशं हरिमी
डे १९ जाग्रज्जागरिते वा लेमाजीयः स्थूलपदार्थान् पंचीकृतकार्यरूपान् दृष्ट्वा अनुभूयाथानंतरं
स्वप्ने मायां मिथ्यारथगजादिरूपां वासनामयां दृष्ट्वा सुषुप्ते सुषनिद्रां स्वरूपसुखाभिव्यंजककेवला
ज्ञानमनुभूयाविद्यादशायामित्येवं प्रकारमात्मानं तुरीयस्थाने समाध्यवस्थायां स्वरूपेण केवलं वी

जातिगुण
क्रियासंबंध

22

नो

च

यत्रसुप्तोनकिंचनकामंकामयतेनकिंचनस्वप्नंपश्यतितत्सुषुप्तंसुषुप्तस्थानएकीभूतः प्रज्ञानघनएवानं
दमयोह्यानंदभुक्चेतोमुखः प्राज्ञस्तृतीयःपादः अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिंत्यमव्यपदे
श्यमेकात्मप्रत्ययसारंप्रपंचोपशमंशिवमद्वैतंचतुर्थंमन्यंतइति अयमर्थः सोयमोंकारप्रतिपाद्यआ
त्मा चतुष्पाच्चत्वारःपादाविश्वादिरूपायस्यसतथा तत्रप्रथमंपादंदर्शयति जागरितेत्यादिना जागरितं
जागरावस्थानंविषयोपलब्धिस्थानंयस्यसतथा वहिर्देहाद्बहिर्विषयेषुप्रज्ञायस्यसतथा द्यौर्मूर्धाच

मुत्रस्यन

क्षुरादित्यः अग्निर्मुखं प्राणोवायुर्देहमध्यमाकाशोवस्तिःसमुद्रः पृथिव्येवपादावितिसप्तांगानियस्यसत
थाःएकोनविंशतिमुखः ज्ञानेंद्रियपंचकंकर्मेंद्रियपंचकंप्राणपंचकं अंतःकरणचतुष्टयमित्येकोनविं
शतिसंख्याकानिमुखानिविषयोपलब्धिद्वाराणियस्यसतथा स्थूलभुक् स्थूलानिपंचीकृतभूतकार्याणिश
ब्दादीनिभुंक्ते उपलभतेइतिसतथा वैश्वानरः वैश्वानरग्रहणंव्यष्टिसमष्ट्यभिमानिनोऽभेदविवक्षयावि
श्वइत्यर्थः अयंप्रथमपादः १ स्वप्नःस्थानंवासनामयभोगःस्थानंयस्यसतथा अंतर्देहांतः वासना
मयप्रपंचविषयाप्रज्ञायस्यसतथाप्रविविक्तंसूक्ष्मवासनामात्ररूपंविषयंभुंक्ते सतथातैजसः
तेजसिलिंगेभवःतदभिमानीत्यर्थःद्वितीयपादः २ सुप्तःपुरुषोयत्रयस्यामवस्थायांनकिंचनकामंका
मयतेनकंचनस्वप्नंपश्यतितत्सुषुप्तमितिसुषुप्तावस्थानिरूपिताकिंचनेत्युक्त्याजागरितमपिस्वप्नमे
वमन्यतेऽस्मिन्सुषुप्तस्थानःपुमानेकीभूतःएकतांप्राप्तः बहुधाविभाजकचक्षुरादीनांतदालीनत्वात् अ

प्त

विहत्वा विशेषादि सर्वशवात्मनः सर्वशरीरेषु अंतर्भवतीति२॥ सामाण्यात्

ह० टि० खदुःखादि वैचित्र्यमुपपाद्य दृष्टानियमादित्यादि सूत्रत्रयेण सर्वगतत्ववादे आत्मवादिमते सर्वेष्वपि सर्वे
षामात्मनां संनिधानात्सर्वसन्निधावुत्पद्यमानादृष्टस्य साधारण्येन सुखदुःखादि सांकर्यमापादयामास
तत्रात्मैकत्ववादे याभावात्तस्मादद्वयानंदरूपेण वेदांतवेद्यतोपपद्यत इति भावः १७ इंद्रं मित्रं वरुणमग्निमाहु
रथो दिव्यः स सुपर्णो गरुत्मान एकं सद्विप्रा बहुधा वदंति अग्निं यमं मातरिश्वानमाहुः तदेवाग्निस्तद्वायु
स्तत्सूर्यस्तच्चंद्रमा तदेव शुक्रममृतं तद्ब्रह्म तदापः स प्रजापतिः स ब्रह्मा स शिवः सेंद्रः सोक्षरः परमः स्व
राट स एव विष्णुः स प्राणः स कालोग्निः स चंद्रमा इत्यादयो मंत्रा ब्रह्मण एव सकल देवतात्मकतया स्थानमाहुः
शुक्रं ज्योतिरमृतं ब्रह्मवेदः आपशब्देन तदधिष्ठाता वरुण उच्यते प्राणः वायुः कालः प्रजासंहर्ता यमः
एतैर्मंत्रैः सर्वदेवात्मकत्वेन सिद्धं विष्णुस्तोति ब्रह्मेति ब्रह्मा विष्णु रुद्र हुताशो रविचंद्रादिंद्रो वायुर्यज्ञ
इतीत्थं परिकल्प्य एकं संतं यं बहुधाहुर्मतिभेदात् तं संसार० १८ ब्रह्मापंचीकृतभूतव्यतिरिक्तसकलस्रष्टा
हिरण्यगर्भः विष्णुः सत्वोपाधिकः सत्वसाधनकः सकलजगत्पालकः परमेश्वरः रुद्रः सत्वोपाधिकस्तमः
साधनकः सकलजगत्संहर्ता परमेश्वरः तस्मात्तमउपाधिकत्वे जीवत्वापाताज्जीवत्वस्य बहुश्रुतिस्मृ
तीतिहासपुराणविरुद्धत्वेन तद्वादिनः पाखंडशिरोमणित्वापत्तेः सत्वं देवा हरादयः इति वशिष्ठवचना
त् इत्यादिषु सगुरूणां भगवान्नीललोहितः सत्वाकृतिस्वभावत्वात्स सञ्ज्ञोत्मसमः प्रजा इति श्रीभ
गवद्वचनाच्च क्वचिच्छ्रूयमाणतमःसंबंधस्य कार्यार्थत्वेनाप्युपपत्तेः [illegible]ति भगवतो विष्णोर्मूर्त्यंतर

ह्यमुदास्ते स्वात्मानंदानुभवजनितसंतोषेणास्तेतमित्यर्थः १६ अथैवस्याचार्ययोः शिष्यः सुखी दुःखी चात्मा प्रति
देहं भिन्न एव प्रकाशते तस्यैकत्वे सुखित्वदुःखित्वादिवैचित्र्यानुपपत्तेः देवदत्तस्य यद्देवदत्तदुःखाद्यनुसंधानप्रसं
गाच्च कथं अद्वितीयानंदरूपेण वेदांतेषूच्यत इत्याशंक्य तस्य सर्वदेहेषु वस्तुत एकत्वेप्यवच्छेदकोपाधितो निर्वचनी
यभेदस्यांगीकारात् एकशरीरावच्छिन्नात्मनि पादे मे वेदना शिरसि मे सुखमित्यनुभवानुरोधेन तत्तदवयवावच्छे
देन सुखदुःखवैचित्र्यवदेकस्मिन्नपि तत्तच्छरीरावच्छिन्ने तदुपपत्तिः देहभेदे न जन्मांतरीयसुखदुःखाद्य
ननुसंधानवद्देवदत्तस्य यज्ञदत्तसुखाद्यननुसंधानोपपत्तेश्चेत्याह पश्यन्निति पश्यन् शुद्धोप्यक्षर एको गुण
भेदात् नानाकारान्स्फटिकवद्भाति विचित्रः भिन्नश्छिन्नश्चायमजः कर्मफलैर्यस्तं संसारध्वांतविनाशं
हरिमीडे १७ यः स्वतः शुद्धः सुखादिसंबंधशून्यः अक्षरः नाशरहितः व्यापको वा अजः जनिरहितः
एकोद्वितीयोपि गुणभेदात् सत्वरजस्तमः परिणामभेदात् नानाकारान् सुरनरतिर्यगाद्याकारभेदान् पश्यन्
तत्तात्म्याध्यासात्कर्मफलैः सुखदुःखैर्विचित्रः नानारूपः भिन्नोनेकः परिच्छिन्नश्च भाति स्फटिकवद्यथा
स्फटिकशिला रक्ताद्युपाधिभेदाद्विचित्रा नेका च भाति तथेत्यर्थः अयं छिन्नः देहांतरे जायमानश्च भ
वति तथा च श्रुतिः एक एव हि भूतात्मा भूते भूते व्यवस्थितः एकधा बहुधा चैव दृश्यते जलचंद्रवत् भूतः परमार्थः
आत्मा भूते भूते देहे देहे एकधा स्वेन रूपेण बहुधा उपाध्युपहितरूपेणेत्यर्थः सत्याकारेपि असंततेश्चाव्य
तिकर इति अनेन सूत्रेण असंततेरुपाधिपरिच्छेदादव्यतिकरः जीवानां सुखदुःखाद्यसांकर्यमिति स्वमतेसु

ग
अनुस्यूतेन
आत्मनि
द्य सा
स्थि

ह० रि०
२०

प्रतिपादयांबभूव: ततः ब्रह्मणो नामरूपातीतस्य प्रत्यक्षाद्यविषयत्वेनासत्वशंकायां सोकामयतेति का
मयितृत्वेन स्वर्गकामीवत् सः तपोतप्यतेति आलोचकत्वेन मंत्रिवदिदं सर्वमसृजतेति सृष्टृत्वेन कुलाल
वत्तदेवानुप्राविशदिति प्रवेष्टृत्वेन सर्पादिवच्च सत्वमुपपाद्य पुनश्च कोह्येवान्यादिना सर्वप्राणिनां जीवनहे
तुत्वेन यदाह्येवैष इत्यादिना विद्वदविद्वद्भयाभयहेतुत्वेन च तदेवसत्वं दृढीचकार अनंतरं च सैषानंदस्येत्या
दिनानंदमीमांसमारभ्य सार्वभौमादिहिरण्यगर्भांतानामानंदानामुत्तरोत्तरशतगुणोत्कर्षप्रदर्शनपूर्वकं
ब्रह्मविदसौ यतोवाचो निवर्तंते अप्राप्य मनसा सह आनंदं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति वाङ्म
नि
नसागोचरनिरतिशयब्रह्मानंदाप्तिं निरतिशयानर्थनिवृत्तिं च प्रतिपाद्य पुनरेतं ह वेत्यादिना अनर्थनिवृत्तिं
14
प्रपंच्य निरतिशयानंदब्रह्मापरोक्षज्ञाने साधनाकांक्षायां भृगुर्वै वारुणिरित्यादिना भृगुवरुणसंवा
दमुपक्रम्य यतो वेत्यादिना ब्रह्मणस्तटस्थलक्षणकथनपूर्वकं प्रियाय पुत्राय वरुणेन पित्रा उपदिष्टं तप
आख्यं पुनः पुनर्विचारमेव ब्रह्मापरोक्षाय मुख्यं साधनं उपदिश्य ब्रह्मविदस्तन्निमानं चांते प्रदर्श्य उप
रमते तैत्तिरीयोपनिषत् इत्यंतया मात्रवत् सर्वप्राणिहितैषिण्या प्रतिपादितं विष्णुस्तौति द्वाभ्यां सत्यमिति
सत्यं ज्ञानं सुखमनंतं व्यतिरिक्तं शांतं गूढं निष्कलमानंदमनन्यं इत्याहादौ यं वरुणो सौ भृगवेऽजं तं संसारध्वां
तविनाशं हरिमीडे १९ सत्यमबाध्यं ज्ञानं जडाविरोधि शुद्धं मलास्पृष्टं अनंतं त्रिविधपरिच्छेदशून्यं व्य
तिरिक्तं कोशपंचकभिन्नं तत्साक्षिणं शांतं निरस्तसर्वोपद्रवं अवयक्तिः यदं ह्येवेषएतस्मिन्न दृश्येना

मितिभेदा बुद्धिवैचित्र्यात् मतिभेदैरिति पाठेभिद्यंत इति भेदाः मित्याभेदाः भिन्नमतेत्यर्थः १८ तैत्तिरीयकोप

निषत् एवं ब्रह्म प्रतिपादयति प्रथमं ब्रह्मविदाप्नोति परमिति संहिताद्युपासनादिभिरेकाग्रचित्तमधिकारि

णं प्रति ब्रह्मविद्यां सविषयां सफलां सूत्रयामास ब्रह्मेति विषयनिर्देशः विदित्यनेन विद्या निर्दिश्यते पर

माप्नोतीति विद्याफलं निर्दिश्यत इति विभागः तदनंतरं सूत्रस्यार्थं संक्षेपतः सत्यं ज्ञानमनंतं ब्रह्म योवेद

निहितं गुहायां परमे व्योमे सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेति अस्य ऋच उदाहरणेन

व्याचकार सत्यमित्यादि सूत्रस्थ ब्रह्मपदव्याख्यानं योवेदेत्यादि वित्पदव्याख्यानं सोऽश्नुत इत्यादि आप्नोति

परमिति पदद्वयव्याख्यानमिति विभागः ऋचोयमर्थः सत्यं कालत्रयबाधाभावोपलक्षितं ब्रह्मेति ल

क्ष्यनिर्देशः सत्यादि यत्त्रयं लक्षणं गुहायां बुद्धौ यत्कारणत्वेन वर्तमानं परमं व्योमाव्याकृताकाशं तत्र

निहितं प्रतिबिंबतया वस्थितं यच्च तन्न्यंत ब्रह्मत्वेन यो वेद स सर्वान्कामान्सार्वभौमादिहिरण्यगर्भांतान्

सह युगपदश्नुते भुंक्ते केन प्रकारेण विपश्चिता सर्वज्ञेन ब्रह्मणा सर्वज्ञब्रह्मस्वरूपेण नोपाधिपरिच्छिन्न

रूपेण ब्रह्मानंदे स्वल्पानंदानामंतर्भावात्सार्वभौमादिहिरण्यगर्भांतभोगानां ब्रह्मवित्स्वरूपभूतत्वाच्च

तन्न्यभास्यत्वाच्च ब्रह्मविदो युगपत्सर्वभोक्तृत्वमित्यर्थः अनंतरं ब्रह्मणः सूत्रव्याख्यानरूपया ऋचया

उदीरितानंतत्वसिद्धये आकाशादेर्ब्रह्मण एवोत्पत्तिं कथयामास ततो योवेदेत्याद्युक्तं ब्रह्मणः प्रत्यक्त्वं

स वा एष पुरुषोऽन्नरसमय इत्यारभ्य देहादिपंचकोशात्मोपदेशक्रमेण ब्रह्मपुच्छं प्रतिष्ठेति पुनर्विस्तरेण

८ सानंदमखंडैकं अनंतं सत्यं परिच्छेदः

ह०टि
२९

विवेके विद्यारण्यगुरुभिः प्रदर्शितं स्यात् पंचीकृतभूतोत्थो देहः स्थूलोऽन्नसंज्ञितः लिंगे तु राजसैः प्रा
णैः प्राणः कर्मेंद्रियैः सह सात्विकैर्धींद्रियैः साकं विमर्शात्मा मनोमयः तैरेव साकं विज्ञानमयो धीर्निश्चया
त्मिका कारणे सत्वमानंदमयो मोदादिवृत्तिभिरिति ज्ञानेंद्रियाणां संशयनिश्चयोभयहेतुत्वेन मनोमये वि

मलिसत्व
प्रध्यानेसन

ज्ञानमये च संबंधः हृदिस्थः कार्यकरणसंघाते साक्षित्वेन यच्चैतन्यं तद्रूपेण स्थितः सन् स्वात्मन्येव स्व
स्वरूप एव आनंदो ब्रह्मेति व्यजनादित्यादिना यतो वेत्यादिलक्षणयोजनपूर्वकं सर्वश्रुतिसारभूतं ब्रह्मनिश्च
त्यपि आदिष्टो भृगुर्यजुरंते तैत्तिरीयोपनिषदि ब्रह्मास्मीति यं वेदतमित्यर्थः ॥ ननु नास्ति जीवातिरिक्तः

25

कश्चिदीश्वरो जगत्स्रष्टा प्राणिनां भयाभयहेतुर्जगतो नित्यत्वात् सुखदुःखयोश्च पुण्यपापमूलत्वाद्देवतानां
च कर्मशेषभूतकर्त्रादिस्तावकत्वेन प्रत्यक्षादिविरुद्धाद्वितीयेश्वरे प्रमाणत्वाभावादिति जैमिनीयानां म
तमाशंक्य सर्वजगतः सावयवत्वादिना कार्यत्वेनानुमितस्याधिष्ठानं परमेश्वरं विना उत्पत्त्यनुप
पत्तेः जीवानां च एतादृशजगदुत्पादने ज्ञानसामर्थ्ययोरसंभवात् कर्मणां च जडत्वेन जगत्सर्जने जीवानां
सुखदुःखदाने च स्वतोऽधिष्ठातारं विना असमर्थत्वात् वेदांतेषु प्राणिकर्मानुरोधेन जगत्स्रष्टुः तत्तत्कर्म
फलदातुश्चेश्वरस्य सिद्धिप्रकारस्य पूर्वमुक्तत्वात् तत्स्वरेक्षतिविरोधेन प्रत्यक्षादेराभासत्वात् कर्मविरु
द्धात्मप्रतिपादकवेदांतानां तच्छेषात्मके स्तावकत्वानुपपत्तेश्चास्ति कार्यमंकुरादिकं सकर्तृकं घटवदिति
कार्यलिंगादितर्कानुगृहीतश्रुतिसिद्धः कश्चित्परमेश्वर इत्यभिप्रेत्याह [illegible] विशेष्यस्य च शक्त्या

अक्रिय
ईश्वरपर
विरुद्धः

कर्त्रादिशेषात्मकः

ह०रि नेकप्रकारं अतर्क्यं तर्कासहं सर्वमिदं जगत्स्रष्टा अथ सृष्टमिदमशेषं सुरनरतिर्यगादिशरीरं कृत्स्नं स्वा
२२ त्मतयैव व्याप्य तत्र प्रविश्य तदात्माध्यासेन स्वस्वरूपतया गृहीत्वेत्यर्थः तत्सृष्ट्वा तदेवानुप्राविशत् स एव
इह प्रविष्ट आ नखाग्रेभ्य इति श्रुतेः सच्च त्यच्चाभवत् परोक्षाप्रत्यक्षरूपोऽभूदिति यावत् तं परमात्मानमीडे
इति २२ एवं तावदद्वैतवाक्यप्राधान्येन स्तुत्वाऽधुना शास्त्रैः सर्वैरपि यथारुचि ऋजुवक्रमार्गाभ्यां प्रति
पाद्यमानं विष्णुं स्तौति वेदांतैरिति वेदांतैश्चाध्यात्मिकशास्त्रैश्च पुराणैः शास्त्रैश्चान्यैः सात्वततंत्रैश्च यमी
शं हृदयाब्जे तं चेतसि बुद्ध्वा विविशुर्यं तं संसारध्वांतविनाशं हरिमीडे २३ वेदांतैः सच्चिदानंदाद्वय प्रत्यगऽ
भिन्नत्वेन प्रतिपाद्यमानैः आध्यात्मिकशास्त्रैः आत्मानं जीवमधिकृत्य प्रवर्तमानैः सांख्यादिशास्त्रैर
संगचिद्रूपेण पुराणैः शिवविष्ण्वादिरूपेण अन्यैश्च शास्त्रैर्वैशेषिकाद्यभिमतैः ज्ञानादिगुणकत्वेन
प्रत्यगभिन्नत्वादिरूपेण च सात्वततंत्रैः सत्स्वरूपमस्यास्तीति सत्वात् वासुदेवः तस्य भक्तपत्वेनाभिमता
सात्वतास्तेषां तंत्रैर्वैष्णवशास्त्रैरित्यर्थः तैर्वासुदेवादिरूपत्वेन च कारादन्यैश्च ब्राह्मशैवादितंत्रैस्तैर्नते
न प्रकारेण प्रतिपाद्यमानं वस्तुतः एकमद्वयमीशं हृदब्जे प्रथमं शास्त्राचार्येभ्यो ज्ञात्वा अथानंतरं ध्यानेन
अंतश्चेतसि बुद्ध्वा ईश्वरोऽस्मीति साक्षादनुभूय केचन पूर्वे महात्मानः यं विविशुः आत्मत्वेन प्रापुस्तं २३
ननु एवं सर्वेऽपि किमिति शास्त्राचार्येभ्य ईश्वरं ज्ञात्वा चेतसि साक्षादनुभूय तं न प्राप्नुवंतीत्याशंक्य श्रद्धा वित्तो
भूत्वाऽन्ये चात्मानं पश्यति यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः
बुद्ध्वा ईश्वरोऽस्मीति २

यदधीनः क्षेत्रज्ञोयंकारयितारंतमुकर्तुः कर्ताभोक्तात्मात्रहि चिच्छक्त्यधिरूढस्तंसारध्वंतविनाशं हरिमी
डे २१ क्षेत्रज्ञोयेन परमेश्वरेण विरहे दुष्करमपि कर्मं किंचित्करोति ग्रहाविष्टवत् आवेशविनिर्मुक्तश्चन
शक्नोति कर्तुं सोस्ति कश्चित्परमेश्वरः अर्जुनादावीश्वरावेशश्रवणात् यस्य च शक्त्या मायया आविष्टोज्ञा
नस्वरूपोपि मूढोहं नजाने किंचित् अशक्तोस्मि मन्यते सोस्ति शक्तिमत्कश्चिदिति गम्यते अत्र च श्रुतिः अ
नीशया शोचति मुह्यमानः इति अनीशया आत्माज्ञानावरणेन ईश्वरभावाप्रतिपत्त्या मुह्यमानो देहादिषु
अभिनिवेशमानः शोचति तज्जतवैक्लव्येन विषीदतीत्यर्थः तदुक्तं भगवतापि दैवी ह्येषा गुणमयी मम
मायादुरत्ययेति अत एव क्षेत्रज्ञोयं यदधीनः सर्वव्यापारेषु वर्तते अस्ति सोऽईश्वरो जंतुषु सर्वभूतेषु क
र्तुः कारयितेति अभ्युपगंतव्यं तदुक्तं सूत्रकारेण परात्तु तच्छ्रुतेरिति परादीश्वरान्निमित्तात् क्षेत्रज्ञः कर्ता
तच्छ्रुतेः एष ह्येव साधु कर्म कारयतीति ईश्वरस्य प्रयोजकत्वश्रवणादिति सूत्रार्थः यस्य परमात्मनः चि
च्छक्त्यधिरूढः चित्स्वरूपव्याप्तः कर्ताभोक्तात्मेति प्रसिद्धोहंकारोऽत्र कार्यकरणसंघे स कृशानुव्याप्तो लोहपिं
डइव दग्धा तमीड इत्यर्थः २१ ननु जीवेश्वरयोः प्रवर्त्यप्रवर्तकभावे नाभेदाद्वैतवाक्यार्थोपपत्तिरित्याशंक्य
८ तयोः कल्पितभेदे सत्यपि वास्तवाभेदमादायैवाद्वैतवाक्यार्थोपपत्तिरित्यभिप्रेत्याह स्वेति स्वेष्वसर्वः स्वा ६
त्मतयैवैक्यमनेकव्याप्याप्नोतः कृत्स्नमिदं स्वस्य मयोक्तं सन्न त्यक्त्वाभूत्परमात्मा संवृप्य एकस्तं संसारध्वं
तविनाशं हरिमीडे २२ सर्वत्वं तरप्रसिद्धोयः परमात्मा एकः वस्तुतो जीवाभिन्नः स्वस्य मनुभूयमाना

ह० रि० ब्रह्मानंदेन एवं उक्तसाधनसहितैरपरोक्षतया अनुभूयमानं अपरमितानंदमात्मानं प्राप्नुयात् संभावना

२३ यां लिङ् तादृशस्य पुंसस्तत्प्राप्तिसंभावनापि नास्तीति ऋतेरर्थः २४ यदुक्तं वेदांतेरीशं दृष्ट्वेति तत् स्फुट

यति यस्येति यस्यातर्क्यस्वात्मविभूतेः परमार्थं सर्वं खल्विदं ब्रह्म नेह नानास्ति किंचन इति श्रुतिसिद्धिः ... दित्वाद् द्वैतरं

गाभमभिन्नं सर्वं सारूप्यं ० २५ स्वात्मविभूतेः स्वात्मानं एव साधनांतरनिरपेक्षतया विभूतिर्विविध

जगदाकारभवनं यस्य स तथा तादृशस्य परमेश्वरस्यातर्क्यतर्कागम्यं अतः एव परमार्थं स वेदांतेषु वास्त

वस्वरूपं परमेश्वरस्य च तर्क्यागम्यत्वे इमौ मंत्रौ साक्षिणौ को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं

विसृष्टिः अर्वाक् देवा अस्य विसर्जनेनाथ को वेद यत आबभूव इयं विसृष्टिर्यत आबभूव यदि वा द

धे यदि वा न यो अस्याध्यक्षः परमे व्योमन् सो अंग वेद यदि वा न वेदेति अस्य चायमर्थः इहास्मिन् संसा

रमंडले कः पुमान् अद्धा निश्चयेन वेद जानीयात् प्रवोचत् प्रब्रूयात् किं कुतो हेतोरियं विसृष्टिः सृज्य

ते इति सृष्टिः विविधा सृष्टिः विसृष्टिः अनुभूयमानमिदं सकलं जगत् आजाता आसमंतादुत्पन्ना

कुतश्च हेतोः स्थितिं अनुभवति तं को वेदेत्यर्थः देवा महाप्रभावा ज्ञास्यंतीत्याशंक्याह अर्वागित्यादिना अ

स्य परमेश्वरस्य विसर्जनेन हेतुना अस्येति कर्तरि षष्ठी अनेन परमेश्वरेण विसृष्टत्वात् देवाः ब्रह्मा

दयः अर्वाचीना अतो न तेषां स्वपूर्वतनपरिज्ञाने सामर्थ्यमित्यर्थः अथैवं सति यत इदमाबभूव तं पर

मेश्वरं को वेद न कोपीत्यर्थः इदमेव परमेश्वरस्य दुर्विज्ञानत्वं प्रपंचयति उत्तरो मंत्रः इयं विसृष्टिः य

तः कारणात् आबभूव यदि वा अथवा यो दधे जगद्धारयति यदि वा प्रलयकाले न दधे न स्थापयति तं

ततस्तु तं पश्यति निष्कलं ध्यायमानः शांतो दांत उपरतः तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यतीत्या
दिश्रुतेः एतैः साधनैर्यतमानैरेव विष्णुरात्मत्वेन प्राप्तुं शक्यो न तु तद्रहितैः शब्दमात्रपंडितैः विदूरकाष्ठाय
मेदुः कुयोगिनामिति वचनादित्याह श्रद्धेति श्रद्धाभक्तिध्यानशमाद्यैर्यतमानैर्ज्ञातुं शक्योऽदेव इहैव यः प्रभु
रीशः दुर्विज्ञेयो जन्मशतैश्चापि विना तैस्तं संसारध्वांतविनाशं हरिमीडे २५ श्रद्धास्तिक्यं गुरुवाक्ये वि
श्वासः भक्तिः गुरौ विष्णौ च प्रेम ध्यानं गुरूपदिष्टार्थे ब्रह्मणि विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्य
यप्रवाहसंपादनं शमोंतःकरणस्य विषयेभ्यो व्यावृत्तिः आदिशब्देन दमः बाह्येंद्रियाणां स्वस्वविषयेभ्यो व्या
वृत्तिः उपरतिः विधितः सकललौकिकवैदिककर्मत्यागः तितिक्षा अपराधिन्यक्रोधः समाधानं स
माध्यानुष्ठानमित्येतानि साधनानि गृह्यंते एतैः साधनैर्यत्मानैर्दर्शने यत्नं कुर्वद्भिः देवः स्वप्रकाशः यः ई
शः परमेश्वरः इहास्मिन्नेव लोके अस्मिन्नेव युगे अस्मिन्नेव जन्मनि अस्मिन्नेव देहे ज्ञातुं प्रत्यक्
न साक्षात्कर्तुं शक्यः नैरेतैः साधनैर्विना जन्मशतैः शास्त्रशतैः पांडित्यशतैरपि यो दुर्विज्ञेयः ज्ञा
तुमशक्यः तमित्यर्थः तथा च श्रुतिः नाविरतो दुश्चरितान्नाशांतो नासमाहितः नाशांतमानसो वा
पि प्रज्ञानेनैनमाप्नुयादिति नाविरतो दुश्चरितान्निषिद्धकृत्यात् अविरतोनुपरतः पुरुषः अशांतो
विषयेभ्योऽव्यावृत्तचित्तः असमाहितः समाध्यनुष्ठानरहितः अशांतमानसोऽसत्तितिक्षः इति क्रोधादिकं कु
र्वन्नपि शब्दात्स्थितप्रज्ञादिष्वुक्तलक्षणरहितो गृह्यते प्रज्ञानेन प्रकृष्टं असंभावनाद्यप्रतिबद्धं ज्ञानं

ह०रि
२८

द्वंते न च तासां स्मृतीनां निरवकाशत्वं युक्तमंगीकर्तुं सर्वज्ञ कपिलादि प्रणीतत्वा(स्मा)दिशंक्य विरोधे त्वनपे
क्षं स्यादसति ह्यनुमानमिति सूत्रेण श्रुतिस्मृत्योः परस्पर विरोधे स्मृतेः प्रामाण्यमनपेक्षमंगीका
र्यं असति हि विरोधे अनुमानं स्मृतेः प्रमाणमिति जैमिनिना प्रतिपादितं न्यायात् श्रुतिविरोधे तासां प्र
प्रामाण्यस्येष्टत्वेऽस्थितेऽपि स्मृतिविरोधशंकमानाय स्मृत्यंतरविरोधोपन्यासेनैवोत्तरं दत्त्वा शीतिम
न्वानः बहूनां स्मृतीनां यद्वै किंच मनुरवदत् तद्भेषजमित्यादि श्रुत्यवगतमाहात्म्य सर्वज्ञ मन्वादि प्रणीता
नां जीवपराभेद जगन्मिथ्यात्व प्रतिपादकानामुपनिषन्मूलत्वेन तु बलवतीनां बहुलतर हृद तरानुकू
लतर्कानुगृहीतानामनवकाशदोषस्य प्राबल्यमभिप्रेत्य स्वतः सिद्धसर्वज्ञ श्रीभगवद्वीश्वरस्मृता
पि अद्वैतमेव परमार्थं निरूपितमित्याह द्रष्टेति द्रष्टा गीतास्वक्षर तत्त्वं विधिनाजं भक्त्या गुर्वी लभ्य हृ
दिस्थं दृशिमात्रं ध्यात्वा तस्मिन्नस्म्यहमित्यवविदुर्यं तं संसारध्वांतविनाशं हरिमीडे २६ गीतासुक्ष
हरं ब्रह्म परममित्यादिषु अजमक्षरतत्त्वं सर्वव्यापकं ब्रह्मस्वरूपं विधिना तद्विद्धि प्रणिपातेनेत्यु
क्तेन द्रष्टा आचार्येभ्यो ज्ञात्वा गुर्व्या भक्त्या महत्या भक्त्या अनन्यया व्यतिरेकाभ्यामात्मानात्मविषयाभ्यां
त्वंपदार्थशोधनरूपया भक्त्या भजनं तया अहमित्यत्र वेद्यानात्मांशप्रहाणेन त्यागेन दृशिमात्रं चे
तन्यमात्रं हृदिस्थं बुद्धौ साक्षित्वेन स्थितमात्मत्वेनोपलभ्य तयोश्च दृश्यद्रष्ट्रोरेकलक्षणत्वेनै
क्यं ध्यात्वा अवानुभूयमाना प्रत्यगभिन्ने अक्षरे अहमस्मीत्यभेददर्शनेन यं विदुः तमित्यर्थः ये त्वह

28

तस्मिन्न

कोवेद किंबहुनाईश्वरोपिस्वमहिमानंपरिछेत्तुंशक्नोतिनवेतिसंशयइत्याह। अस्यपरिदृश्यमानस्यजगतो
योऽध्यक्षः अधिष्ठायप्रवर्तकः परमेश्वरः अविद्यातत्कार्येभ्यः परस्मिन्व्योमन् व्योम्निस्वस्वरूपचि
दाकाशेप्रतिष्ठितः सोपिस्वमहिमानंवेदजानाति यदिवानवेद नजानाति अपरिछिन्नस्वप्रकाशस
च्चिद्रूपस्यपरिछेदाभावेनाविषयत्वेन च दुर्विज्ञानत्वात्सगुणस्वरूपस्यचगुणानामानंत्येनतथात्वात्
ईश्वरस्यसर्वज्ञत्वप्रसिद्धेश्चश्रुतेः संशयः ईश्वरस्यस्वरूपेइयत्तापरिज्ञानमस्तिनवेति वयंतुनिर्णे
यामोनास्तीतिकुतः उभयस्याप्यानंत्यादेव नचतस्यसर्वज्ञत्वव्याहतिः स्वरूपेइयत्ताया अप्र
त्वान्नचशशविषाणज्ञानेनचतस्यासर्वज्ञत्वमिति एवमपिसर्वंखल्विदंब्रह्मेति अत्रश्रुतौ श्रुति
विद्भिराचार्यैः कथंचित्सर्वाधिष्ठानत्वेननिरुक्तं यस्यपरमार्थिकंरूपंकथमित्याकांक्षायामाह त
ज्जादित्वादिति अतश्रुतौ तज्जलानीति यदद्वयेनयतइदंजगत् तज्ज त्वात् ततोजायतेलीयते
अनितिच इत्येवमर्थकेन अव्धितरंगाभं समुद्रतरंगतुल्यमिदंकार्यजालं तज्जत्वात् तद्वत्त्वात्
तदनात्वाद्वाभिन्नंब्रह्मणोभेदेन अध्यस्तत्वात् ततोऽन्यतंतदधिष्ठानभूतं वस्तुतोनिश्रयंचसच्चिदानं
दाद्वयंब्रह्मैवपरमार्थमित्येवंनिरुक्तंनिरूपितंतमीडइत्यर्थः २५ नन्वेवंब्रह्मणोनिखिलजगदधिष्ठान
तयाअद्वितीयत्वेप्रत्यगभिन्नत्वेच सर्वज्ञभगवत्कपिलादिस्मृत्यनवकाशप्रसंगः तासुहिस्मृतिषुप्र
धानादेः कारणत्वंजीवपरयोर्जीवानांचपरमार्थतोभेदोजगतः परमार्थत्वमि त्येतेअर्थाःप्रतिपा

प

वं

ह०रि २५

भोगद्वाराभूतैरिंद्रियैः भोग्यपदार्थान् शब्दादीन् अजस्रं सदा भुंक्ते उपलभते यथा ह्येचेह्येचे प्रत्यंतःकरणाद्यु
पाधिषु बहुधा अप्सु अनेकपात्रस्थितासु इंदुवत् चंद्रवदास्तेव तं तं तमीडे इत्यर्थः तदुक्तं एक एव हि भू
तात्मा भूते भूते व्यवस्थितः एकधा बहुधा चैव दृश्यते जलचंद्रवत् इति उक्तोऽर्थः २७ ननु सर्ववादिनोऽद्वैतमे
व परमार्थमवलंबंते युक्तिभिश्च बहुभिः तदेवोपपादयंति तदेव सर्वैरनुभूयते च श्रुतिरपि अद्वैतानुगुण्येन
व योजयंति भवानेक एव खलु अद्वैतं परमार्थं ब्रूते अतो बहुजातिपक्षत्वात् त्वत्पक्षे कथं विश्वासः स्यादि
त्याशंक्य न वादिबहुत्वैकत्वं वस्तुनिर्णये प्रयोजकं किंतु प्रमाणयुक्तिबाहुल्यमेव न ह्यंधानां सहस्रं चक्षु
२० ष्मत एकस्वरूपविषये प्रतिवादि भवितुमर्हति प्रमाणयुक्तिबाहुल्यं चास्मत्पक्षे एव इतरपक्षे च प्रमाण
युक्त्याभासबाहुल्यं तच्च सर्वज्ञभगवद्बादरायणप्रणीतब्रह्मसूत्रपर्यालोचनेनाति स्फुटं ज्ञातुं शक्य
त इत्यभिप्रेत्याह युक्तेति युक्त्या लोड्य व्यासवचांस्यत्र हि लभ्यः ह्येचेह्येचज्ञोरविंद्रिः पुरुषाख्यः सोऽहं सो
सोऽहमेवेति विदुर्यं तं संसारध्वांतविनाशं हरिमीडे २८ व्यासवचांसि अथातो ब्रह्मजिज्ञासेत्यादीनि
अनावृत्तिः शब्दादित्यं तानि ब्रह्मसूत्राणि तत्तच्छ्रुतिमूलकानि आलोड्य सम्यग्विचार्य युक्त्या तर्केण उप
लब्धं एनमेतत्प्रमाणेन चाबाधितेन ह्येचह्येचज्ञातरविंद्रिः ह्येचाणां देहाद्यहंकारपर्यंतानामांतराणां प्रि
यिव्याद्यव्याकृतांतानां बाह्यानां च ह्येबज्ञयोर्जीवेश्वररूपयोश्च विवेकं ये विंदंति ते तत्तदुपाधिनिराकरणे
न शोधितपदार्थद्वयाविंद्रिरित्यर्थः पुरुषाख्यः त्रिविधपरिच्छेदशून्यतया पूर्णत्वेन पुरुष इत्याख्या यस्य

रमनिर्देश्यमव्यक्तं पर्युपासते सर्वत्रगमचिंत्यं कूटस्थमचलं ध्रुवं क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ज्ञेयं यत्तत्प्र
वक्ष्यामि यज्ज्ञात्वामृतमश्नुते अनादिमत्परं ब्रह्म न सन्नासदुच्यते इत्याद्यध्यायैर्मात्रा सर्वभूतेषु येनैकं भावमव्य
यमीक्षते अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकमित्यादौ सर्वत्र गीतासु ब्रह्मणः संगत्वाद्द्वितीय [illegible] गभि
न्नत्वादिकं सम्यक्प्रतिपादितमिति भावः २६ स्वकृतविचित्रयोनिषु विशन्निव हेतुतया तारतम्यचकास्यतेऽ
नलवत्स्वकृतानुकृतिः अथ वितथेष्ववमूष्ववितथं तव धाम समं विरजधियोऽन्वयंत्यभिविपन्न्यवएकरसं
एकः त्वमात्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनंत आद्यः नित्योऽक्षरोजस्रसुखो निरंजनः पूर्णोऽद्वयो मुक्त
उपाधितोऽमृतः २ तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखं त्वय्येव नित्यसुखबो
धतनावनंते मायात उद्यदपि यत्सदिवावभाति ३ न स जीवः शिवादन्यो यो भुंक्ते कर्मणां फलं भेदाभावात्ततश्चे
त्थं न कर्मफलमर्हति अंतः सर्वजगत्साक्षी चिद्रूपः परमेश्वरः अद्वितीयो महानंदः क्रीडया भोगमर्हति जी
वरूपश्च वास्थित्वा यः क्रीडति पुरत्रये न स जीवः सदा शंभुः सत्यमेव न संशयः १ स सत्योऽसत्यसाक्षित्वात्स
त्यश्चित्सुखं तथा प्रेमास्पदत्वाद्द्वैताभेदाभावात्सुखर्षभः इत्यादौ सर्वत्र शिवविष्णुपुराणेष्वप्यद्वैतो विष्णुः
प्रत्यगभिन्नं प्रतिपादितमित्यभिप्रेत्याह क्षेत्रज्ञत्वमिति क्षेत्रज्ञत्वं प्राप्य विभुः पंचमुखैर्यो भुंक्ते जस्रं भोग्यप
दार्थान्प्रकृतिस्थः क्षेत्रे क्षेत्रेऽप्सु विधुरिवैको बहुधास्ते तं संसारध्वांतविनाशं हरिमीडे २७ यो विभुः पर
मात्मात्मोप्रकृतिस्थः अविद्या तत्कार्ये सुप्रतिबिंबिततया क्षेत्रज्ञत्वं जीवभावं प्राप्य गत्वा पंचभिर्मुखैर्विषय

ग ती त्वा

२ भाष्यकारः

ह० रि चकार एवं द्वितीयाध्यायेन ब्रह्मसमन्वयविरोधं प्रतिक्षिप्य तृतीयाध्याये प्रथमपादेन संसारिण इहामुत्राव

२६ गत्यागति निरूपणपूर्वकं संसारदोषविवेचनेन वैराग्यमधिकारिविशेषणं दृढीकृत्य तदनु द्वितीयपादेन वाक्या ती

दा र्थज्ञानांगत्वेन जाग्रदाद्यवस्थाभ्यो विविच्य त्वंपदार्थं प्रदर्श्य तत्पदार्थमपि सकलद्वैतप्रपंचनिरासपूर्वकं विवि

४ अभेदा च्य प्रदर्शयामास ततस्तृतीयपादेन विद्याभेदाभेदाभ्यां गुणोपसंहारानुपसंहारौ प्रदर्शयन् विधिरूपावांतर

भ्यां वाक्यस्य निषेधरूपावांतरवाक्यस्य च परिमाणं न्यायेन प्रदर्श्य ततश्चतुर्थपादेन पुरुषार्थोऽतः शब्दादिति बादराय

ण इति प्रथमाधिकरणेन ब्रह्मज्ञानस्य कर्मनिरपेक्षस्यैव मोक्षसाधनत्वं प्रसाध्य तस्य च उत्पत्तावंतरंगसाध

२० नं संन्यासशमादिकं बहिरंगसाधनं यज्ञादिकं च प्रदर्श्य ज्ञानसाधनमनुतिष्ठतस्तस्मात् सति प्रतिबंधे इहैव फ वेदांता

देहांतरे लं सति च तस्मिन्नमुत्र चेत्यंतिमाधिकरणेनोक्त्वा तृतीयाध्यायं समापयामास ततश्चतुर्थप्रथमपादेन आवृ नोक्तं

त्तिरसकृदुपदेशादित्यधिकरणेन ब्रह्मसाक्षात्कारपर्यंतं श्रवणाद्यावृत्तिं कर्तव्यतया प्रदर्श्य आत्मेति तूप भ्या

सनकादि गच्छंति ग्राहयंति चेत्यत्र अहं ब्रह्मास्मीत्यादौ परमेश्वर आत्मत्वेनैव गृहीतव्यः त्वं वा अहमस्मीत्यादौ वा आत्मत्वे

कादय नैव जाबाला आत्मानमुपगच्छंति एष त आत्मेत्यादिनात्मत्वेनैव ग्राहयंति चेत्यधिकरणेन वाक्येषु जीवब्रह्मा

शिष्यान् भेदं सम्यक् प्रदर्श्य ततः सगुणोपासकस्य क्रममुक्तिमभिधाय द्वितीयपादे पुनस्तस्यैव उत्क्रांतिप्रकारमु सगुणोपा सकस्य

पवर्ण्य तदनु तृतीये उत्तरमार्गचिंतापूर्वकं तस्यैव कार्यब्रह्मप्राप्तिं प्रदर्श्य निर्गुणब्रह्मविदश्च गत्युत्क्रांती प्रति

षिध्य ततश्चतुर्थेन निर्गुणविद्याफलं ब्रह्मात्मनावस्थानमुपवर्ण्य सगुणविद्याफलं च ब्रह्मलोके ऐश्वर्य

अथातो ब्रह्मजिज्ञासेति त्रिविधपरिच्छेदशून्यप्रत्यगभिन्नब्रह्मणो मुमुक्षुभिर्विचार्यत्वं प्रतिज्ञाय जिज्ञास्य ब्रह्म [illegible] लिंगप्रमाणामि
त्याकांक्षायां [illegible] जन्माद्यस्य यत [illegible] लक्षणं ६

स परमात्मा अत्र हि अत्रैव देहेंद्रियसंघाते तत्साक्षी प्रत्यक्त्वेन लभ्यः विषयाकारेणाशक्यः तदिदं न प्रकारमेवाह
योहमित्यादिना योहं देहेंद्रियादिसाक्षी सोऽसौ परमेश्वरोस्मि यश्च परमेश्वरः सोस्म्यहमेवेति यं विदुः प्रत्यगा
त्मनः भ्रांतिसिद्धाब्रह्मत्वव्यावृत्तये ब्रह्मणश्चारोपितपरोक्षत्वनिवृत्तये च परस्परव्यतिहारेण यं विदुरित्यर्थः
तत्त्वमेव त्वमेव तदित्यादिश्रुतेः अयंभावः सूत्रकारोपि भगवान्बादरायणः शास्त्रयोनित्वादिति अनेन सूत्रे
ण प्रमाणं चोपन्यस्य शास्त्रस्य कार्यपरत्वेन कथं सिद्धब्रह्मपरत्वं इत्याशंकायां तत्तु समन्वयादिति सूत्रेण कार्यपर ५५
त्वनिरासपूर्वकं सिद्धब्रह्मपरत्वं व्युत्पादि धाजेकन्याये रुपपाद्य पश्चादीक्षतेर्नाशब्दमित्यधिकरणेन जगतः प्रधान
कारणकत्वं दूरीकृत्य ब्रह्मण एव सर्वेषां वेदांतानां गतिसमानं च प्रतिज्ञाय तद्द्विगतिसमान्यमानंदमयोभ्यासादित्या
रभ्य प्रथमद्वितीयतृतीयपादे रन्यार्थत्वशंकानिरसनपूर्वकमुपपाद्य चतुर्थपादे केचिदधिकरणैः प्रधा
वृत्तण नस्याशब्दत्वं प्रपंच प्रमाणो यन्यासानंतरं तत्र ब्रह्मप्रकृतित्वेन जगतो निमित्तत्वेन च प्रकृतिश्च प्रतिज्ञा
दृष्टांतानुपरोधादित्यधिकरणेन व्यवस्थाप्य प्रथमाध्यायं समापयामास अनंतरं च द्वितीये प्रथमपादेन
स्वपक्षे सांख्ययोगवैशेषिकादिस्मृति विरोधं परिहृत्य तैरुद्भावितसकलतर्कविरोधं अद्वैतसमन्वयस्य
सम्यक्परिजहार तदनु द्वितीयपादेन सांख्यवैशेषिकनैयायिकबौद्धजैनक्षपणकपांचरात्रादिप[illegible]णां व
हुलतरासारतरयुक्त्याभासकल्पितत्वं स्फुटं केचिदधिकरणैः प्रदर्श्य तदस्येश्वरं च प्रमाणयुक्तिभ्यामुपल
याप्रतिचिक्षेप ततः तृतीयपादेन भूतभोक्तृश्रुतीनां चतुर्थेन लिंगदेहश्रुतीनां च परस्परविरोधं सम्यगपा

ह० टि० २७

त्मनो ब्रह्मत्वज्ञानाभावेन तत्त्वदृष्ट्या न तेषु संसारनिवृत्तिः ब्रह्मवित्त्वदृष्ट्या तन्निवृत्तिस्त्विष्टैव यदा ब्रह्मवित् स्वदेहेन्द्रियादिसाक्षिणं असंगं निर्विकारासंसारिब्रह्मत्वेन पश्यति तदा परदेहेन्द्रियसाक्षिणमपि तथैव पश्यति तदुक्तं ब्रह्मगीतायां स्वशरीरेन्यदेहेषु समं निष्क्रियतां दृढं अपरोक्षेण यं ते ह्यमृताश्च भवन्ति हि क्षेत्रमुक्तो महानुविद्वानज्ञ इत्यादिभेदतः एक एव सदा भाति चेतनः स्वप्रवत्स्वयं अतः स्वमुक्त्या चान्येषामाभासानामपि ध्रुवं मुक्तिं जानाति देहे वा आत्मानमात्मविद्वरः स्वसंसारदशायां तु स्व भ्रांत्या सर्वदेहिनां आभासानां तु संसारं विदन्मुक्तिं तथैव वेत्ति अतो ब्रह्मादिस्तंबांतप्रत्यग्भूतं सर्वाधिष्ठानं ब्रह्म आत्मत्वेन जानतः पुरुषस्य स्वदेहे परदेहे वा न संसार आ इति भावः २९ ननु ब्रह्मज्ञानान्निवृत्तस्यापि संसारस्य कदाचित्पुनरुद्भवः संसारस्य स्यात्सुषुप्तिप्रलययोर्निवृत्तस्य प्रबोधे पुनरुद्भवदर्शनादित्याशंक्याह यस्मिन्नित्यादिना यस्मिन् ब्रह्मणि लीना उपाधिपरित्यागेन एकीभूता इह संसारे पुनर्जन्म न लभंते न प्राप्नुवंति नमित्यर्थः न स पुनरित्यादि श्रुतेः सुषुप्त्यादौ संसारकारणाज्ञानानिवृत्तेरत्र च तत्त्वज्ञानेन तन्निवृत्तेर्दृष्टांतदार्ष्टांतिकयोर्वैषम्यमिति भावः बृहदारण्यके चतुर्थाध्याये मधुब्राह्मणे एवं श्रूयते इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव सः योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वं इमा आपः अयमग्निः अयं वायुः अयमादित्यः एवं चंद्रः पर्यायाः श्रूयंते तत्र प्रथमपर्यायस्यायमर्थः अयं महापृथ्वी सर्वेषां भूतानां प्राणिनां म

मुपपाद्य तेषांसमुणविदुषामंते अनावृत्तिःशब्दात् अनावृत्तिः शब्दादिति ब्रह्मोपदेशेन मुक्तिं प्रदर्श्य उपराम इत्यं
त सर्वज्ञवादशयणाग्रणीश्चातुर्मेहतीमीमांसायांपरिशीलितयांभेदवादिमुनांमुषितैरद्वैतकर्नकैचलस्यनकाचि
त्क्षातिरति २८ ननुकिमयमधिकारी स्वदेहेंद्रियादिसाक्षिचैतन्यस्यैव ब्रह्मत्वंजानीयात् उतसर्वशरीरादिसा
ब्रह्मत्वंजा) क्षिणामपि आद्ये किंपुरुषांतरचैतन्यंपरमार्थमितिजानाति उतकल्पितमिति नाद्य द्वैतप्रसंगात् नद्वितीयः तत्
नीयात् दृष्टांतेनस्वस्यापिकल्पितत्वप्रसंगात् यदिद्वितीयः नतस्योक्तदोषद्वयं किंतुस्वस्यब्रह्मत्वज्ञानात् संसारनिवृत्ति
वदन्येषामपिस्वज्ञानकालेतन्निवृत्तिप्रसंगः इत्याशंक्य स्वसाक्षिचैतन्यवत् पुरुषांतरचैतन्यस्यापिब्रह्मत्वंजा
द्वि नातीतियंपक्षमवलंब्याह एकीकृत्वेति एकीकृत्वानेकशरीरस्थमिमंज्ञंयंविज्ञायेहैवस एवाद्युभवेति यस्मि
न्ज्ञीनानेहपुनर्जन्मलभंते तंसंसारध्वांतविनाशंहरिमीडे २९ अनेकशरीरस्थं अनेकेषुशरीरेषुदेवतिर्यग
दिषुसाक्षितयास्थितं इमंज्ञंचैतन्यमेकीकृत्यपरमात्माभिन्नतयाज्ञात्वाततः सर्वात्मभूतंयंपरमात्मानंविज्ञा
य देहेंद्रियादिसाक्षिप्रत्यगभिन्नतयाअपरोक्षीकृत्य इहैवास्मिन्नेवदेहे आयुःतत्कालमेवस एवसर्वात्मभूतः
परमात्मैवभवतीत्यर्थः अत्रश्रुतिः यत्परंब्रह्मसर्वात्माविश्वस्यायतनंमहत् सूक्ष्मात्सूक्ष्मतरंनित्यंतत्त्वमेव त्व
मेवतत् ब्रह्मवेदब्रह्मैवभवति तद्योयोदेवानांप्रत्यबुध्यत सएवतदभवदिति अत्रहिमंत्रेश्रोतुःप्रत्यगात्मा
नमन्यब्रह्मादिस्तंबपर्यंतप्रत्यग्भूतसकलजगदधिष्ठानब्रह्मत्वंबोध्यते नचसर्वेषांप्रतीचांब्रह्मत्वज्ञानेस्व
स्मिन्निवपरेष्वपिसंसारनिवृत्तिप्रसंगदोषः किंब्रह्मवित् इह मुक्तिनिवृत्तिरापाद्यते उत्परदृष्ट्यानात्यः परेषांसा

अधिनं ह ३

द०टि २८

युक्त्याविभूत्याइश्वरभावप्रतिपत्त्या शक्रोपासनं शक्रेणइंद्रेण स्वस्य उपासनमासाद्य प्राप्य यस्त्वेवं ब्राह्मणोविद्यात्तस्यदेवा अपसँन्वसे आसन्नित्यर्थः इतिश्रुत्युक्तं देवपशुत्वव्यावृत्त्याइश्वराभेदेनदेवैरुपास्यत्वप्राप्तित्यर्थः योसौसर्वात्मापरमेश्वरः सोहं योहमस्मि बुध्यादिसाक्षी सोहं परमेश्वरइति परस्परव्यतिहारेणयंपरमेश्वरं विदुःसाक्षादनुभवंतितमीडे शक्रोपासनमासाद्य यंविदुरितिप्रयोगोमुखंव्यादायस्वपितीतिवद्द्रष्टव्यं ३० तद्योहं सोसौ योसौ सोहं त्वं वाहमस्मि भगवोदेवते अहं वै त्वमसि भगवोदेवते इत्यादिश्रुतिभिःपरस्परव्यतिहारेण उपास्यत्वेनप्रतिपादितं विष्णुस्तौति योयामिति योयंदेहे चेष्टयितांतःकरणस्थः सूर्ये चासौ तापयिता सोस्म्यहमेवइत्यात्मैकोपासनयायं विदुरीशं तं संसारध्वांत ३१ यो यं देहे शरीरे चेष्टयिता चेष्टाहेतुः प्रवर्त्तयिता जडचेष्टालिंगैर्व्याप्यंतद्धेतुत्वेन चेतनोवर्त्तते असंगस्य चेष्टाहेतुमुपपादयति अंतःकरणस्थेति अंतःकरणोपाधिकइत्यर्थः असौ अंतःकर्णोपहितएवसूर्ये चासौ तापयितातपतः सूर्यस्यप्रयोजककर्तृत्वेनांतर्यामी भवति यश्चसूर्येतापयिता सोहमेवास्मीति अनेनप्रकारेण आत्मैकोपासनया परस्परव्यतिहारेणात्मैकत्वचिंतनेन यमीशं विदुस्तमीडइत्यर्थः ३१ उपास्यत्वाभिधानेनवेद्यताशंकांप्रत्याचष्टेकरोति विज्ञानांशेति विज्ञानांशःयस्यसतः शत्त्यधिरूढो बुद्धिर्बुद्ध्यत्यच बहिर्बोध्यपदार्थान् नेवांतस्थं बुध्यतियंबोधयितारं तं संसार० ३२ सतःपरमार्थरूपस्यपरमेश्वरस्य विज्ञानांशः विज्ञानस्य सरूपत्तानस्य अंशइवांशः ब्रह्मणोनि

मस्मि

वेन

३२

ग

धुमधुवत्उपभोग्यं यथा मक्षिकाणां एकं मधुपटलं तद्वत् तथा अस्यै पृथिव्यै अस्याः पृथिव्याः सर्वाणि भूता
नि मधुः अनेन पृथिव्या भूतानां च परस्परभोग्यत्वेन परस्परकार्यकारणत्वमुक्तं ततस्तदुभयं मिथ्येत्यर्थः तद्
भयोपहितपुरुषस्यैकत्वमाह यश्चेत्यादिना यश्चायमस्यां पृथिव्यां तेजोमयश्चैतन्यप्रकाशरूपः अमृतम
यः उपाधिनाशेपि स्वयममरणधर्मा पुरुषः यश्चायमध्यात्मशारीरः स्थूलशरीरोपाधिक तेजोमयोऽमृ
तमयः पुरुषः अयमेव सः पृथिव्युपाधिकः पुरुषः अयंशब्दार्थमाह योयमात्मेति आत्मा स्थूलशरी
रोपाधिकः अध्यात्माधिदैवतोपाधिभेदादेवानयोर्भेदः न स्वरूपत इत्यर्थः इदमुपाधिद्वयोपहितचै
तन्यं [illegible] इत्यर्थः एवं सर्वेषु पर्यायेषु अमृतमविनाशी ततः
इदं ब्रह्म जगत्कारणभूतं अत इदमुपाधिद्वयोपहितचैतन्यमेव सर्वं सकलं जगत्तद्व्यतिरेकेण सर्वम
स्तीत्यर्थः एवं सर्वेषु पर्यायेषु द्रष्टव्यं अपरपर्यायेत्वं तु रेतउपहितयोरेकत्वं ततः अग्निवागुपहितयो
रेकत्वं ततो वायुप्राणोपहितयोरेकत्वं ततः सूर्यचक्षुरुपहितयोः एवं सर्वेषु पर्यायेषु अध्यात्माधिदै
वतोपहितद्वंद्वानामेकत्वकथनपूर्वकं यत्सर्वात्मकं ब्रह्म प्रतिपादितं तद्धेतु इदानीं स्तौति द्वंद्वैकत्वमि
ति द्वंद्वैकत्वं यच्च मधुब्राह्मण[illegible]वाक्यैः कृताशक्तोपासनया साक्षाद्विभूत्या योसौ सोहं सोस्म्यहमेवेति
विदुर्यं न संसार० ३० मधुब्राह्मणवाक्यैः यश्चायमस्यामित्यादिभिः प्रतिपर्यायं अध्यात्माधिदैवतं यत्
द्वंद्वैकत्वमुक्तं द्वंद्वानां पृथिवीशरीराग्निवागाद्युपहितानां यदैकत्वं कथितं तत्[illegible]गृहीत्वा तज्ज[illegible]

ह०रि लोच्यज्ञास्यइहास्मीति विदुर्यंतंसंसार० ३३ देहेकार्यकारणसंघातमध्येकोयंदेवः कोवाज्ञाता किंशरीरं
२९ उतइंद्रियाणि अथप्राणः यद्वा अंतःकरणमिति इत्थमनेनप्रकारेणसुविचार्यसुष्ठुसम्यक्विचार्यदे
हादीनांवेद्यत्वेनघटादिवत् ज्ञातृत्वाभावंनिश्चित्य एव अपरोक्षतयानित्यभासमानःदेवःस्वप्रकाशचि
दात्मैवज्ञाताश्रोताअनंदयिता चेत्यालोच्य आलोचनेनज्ञात्वा इहएषुदेहादिषुमध्येज्ञाश्रोतत्व्योस्मी
तियेविदुःतमित्यर्थः अदृष्टोद्रष्टा अश्रुतःश्रोताअमंतोमंता अविज्ञातोविज्ञातेत्यादिश्रुत्यास्वयंदर्श
नाद्यविषयस्यैवद्रष्टृत्वाद्युपपा[illegible]दनादितिभावः ३२ कोह्येवान्यात् कःप्राण्यात् यदेषआकासआ
३३ नंदोनस्यात् एषह्येवानंदयाती तितैत्तिरीयकश्रुतिः अस्याश्चायमर्थः यत् यदिएषआकाश आसमं
तात्काशतइत्याकाशश्चेतन्यं यद्वा आकाशवदसंगत्वविभुत्वादिधर्मयोगादाकाशश्चिद्धातुः आनंदः
सुखरूपआत्मानस्यात् तदाकोहिपुरुषः अन्यात् अपानचेष्टांकुर्यात् प्राण्यात् प्राणनव्यापारं
कुर्यात् उपलक्षणमेतत्सकलकार्यकारणव्यापारं कःकुर्यात् इत्यर्थः रथाद्यचेतनप्रवृत्तेश्चेत
नाधिष्ठाननिबंधनत्वदर्शनात् जीवनस्यचानंदपूर्वकत्वदर्शनात् दुःखसतिप्राणवियोगादेरे
दृष्टीनहि वदर्शनादितिभावः तदेवाह एषह्येवाकोशएवहियस्मादानंदयातिआनंदयतिअतःसर्वेजनःप्राणिति
अपानीति यदिप्राणिनांकदाचित्स्वरूपानंदोऽभिव्यक्तोनस्यात् अतिदुःसहंसंसारदुःखंसोढुमपि
जीवनधारणंनस्यात् तदाशयैवजीवनामाशास्तेसर्वोजनइत्यनयाश्रुत्यापिचेष्टाजीवनहेतुत्वेनचि

रवयवत्वात् शक्त्यधिरूढो ब्रह्मणो विद्याशक्तिप्रतिबिंबितो जीवः बहिरूपलक्षणमेतच्च बोध्यपदार्थो
न बुद्धिं तद्धर्मांश्च घटपटादींश्च अत्र जगति बुध्यति जानाति बुद्धिस्थश्चांतस्थं स्वान्तर्वर्तमानं बोध
यितारं बाह्यपदार्थबोधेस्तस्याः बोद्धृत्वप्रदातारं चैतन्यसंबंधं विना जडायाः तस्याः बोद्धृत्वानुप
पत्तेः स्वयंप्रकाशचिद्रूपं न बुध्यति न जानाति तमित्यर्थः अत्र श्रुतिः विज्ञातारमरे केन विजानीयात्
येनेदं सर्वं विजानाति तं केन विजानीयात् नहि विज्ञातेर्विज्ञातारं विजानीयादित्यादि अस्याश्चायमर्थः
अरे मैत्रेयि विज्ञातारं बाह्याभ्यंतरपदार्थानां स्वप्रकाशचिदात्मकस्वस्वरूपेणावभासयितारं केन
करणेन विजानीयात् पुरुषः करणस्य मनआदेर्ज्ञेयविषयत्वेन ज्ञातृविषयत्वाभावादित्यर्थः कर
णस्यापि स्वतो ज्ञातृत्वं नास्ति किंतु चैतन्यबलेनैवेत्याह येनेत्यादिना इदं सर्वं जगत् येन बुद्ध्यारूढचै
तन्येन विजानाति पुरुषस्तं केन विजानीयात् न केनापीत्यर्थः विज्ञातेर्बुद्धेर्विज्ञातारं बोद्धारं न विजानी
यात् विज्ञानेन न विषयीकुर्यात् इति उपसंहरति याज्ञवल्क्यवचनं पूर्ववाक्यं मैत्रेयीं प्रति तमेव [illegible]
दृश्यते त्वग्र्यया बुद्ध्येत्यादेरस्य एतच्छ्रुत्या विरोधोऽर्थः पूर्वमुक्तमेव हृदृष्टेः उपास्यत्वमपि आत्मनस्ता
दृशवृत्तिप्रवाहव्याप्यत्वमेव न तु फलव्याप्तिविंबचैतन्यविषयत्वमिति हृदयं २२ न केवलमुक्तश्रुत्यै
वात्मनो ज्ञातृत्वसिद्धिः किंतु श्रुत्यनुकूलतर्केणापि ज्ञेयस्य घटादिवदनात्मत्वेन ज्ञातृत्वायोगा
त्तत्सिध्यतीत्याह कोयमिति कोयं देहे देवइतीयं सुविचार्य ज्ञाता श्रोता नंदयिता च एष हि देवइत्या

द०टि
३०

ममपश्यदिति तस्यब्रह्मत्वबोधनंजीवस्योक्त्वा पुनस्तमेवार्थं पुरुषेहवाअयमादितोगर्भोभवतीति
वैराग्योपपादनपूर्वकंकोयमात्मेति वयमुपास्महे इति वाक्येनमूर्धप्रपदद्वाराप्रविश्ययोजीवप्राणयोश्चि
त्क्रियाशक्त्यात्मकयोर्मध्येकतरः सआत्मेति विमृश्ययेनवापश्यतीत्यादिचैतन्यस्यैवत्वंपदार्थत्वंनिर्द्धा
र्यततः एषब्रह्मेत्यादिनासर्वात्मकंतत्पदार्थंब्रह्मोपदिश्यप्रज्ञानप्रतिष्ठंप्रज्ञानंब्रह्मेतितयोरैक्यमुक्त्वाप्र
पंचयामास इत्यमैतरेयकश्रुत्याविचारपूर्वकंसंग्रहविस्ताराभ्यांप्रतिपादितेविष्णुरेवोऽतिश्लोकद्वये
नप्राणइति प्राणोवाहंवाक्श्रवणादीनिमनोवाबुद्धिर्वाहंव्यस्तउताप्यपिसमस्तः इत्यालोच्यसाक्षिरूपोऽस्

२५

मीतिविदुर्यतंसंसार ३५ बुभुक्षितःपिपासितोहंवच्मिशृणोमिपश्यामिमन्येकुर्वे इत्यनुभवात्प्राणादीनिप्र
त्येकमहं तत्समुदायोवा उतएतत्सकलसाक्षीइत्यालोच्यप्राणादिभिन्नोज्ञप्तिः तत्साक्षीज्ञांशरूपोऽस्मीतिये
विदुः तमित्यर्थः ३५ ननुप्राणादिव्यष्टिरहमित्यात्मत्वानुभवात् कथंचैतन्यस्यात्मत्वमित्याशंक्याह नाहमि
ति नाहंप्राणोनैवशरीरंनमनोहंनाहंबुद्धिर्नाहमहंकारधियौच योजज्ञांशःसोस्म्यहंवैतिविदुर्यतंसं
सार २६ अत्रधीशब्देनचित्तमुच्यतेप्राणादिचित्तपर्यन्तानात्मानः दृश्यत्वात्भौतिकत्वात्सावयवत्वात् ममे
दंबुद्धिविषयत्वात् सुषुप्त्यादौतमनिसत्यपितेषामदर्शनात् उपचयापचयधर्मत्वाच्च घटादिवत् किंतुयोत्र
दृश्यत्वादिधर्मरहितः प्राणादिसकलसाक्षितयाव्यभिचरत्सु स्वयमव्यभिचारिचिद्धातुः ज्ञांशोज्ञानांशः परमा
र्थप्रत्यगात्मासच्चिदानंदस्वरूपःपरमानंदतुरीयःशिवः सएवाहमस्मि वच्मीत्यादिप्रतीतिस्तु रक्तःस्फटि

चिद्रूपानंद आत्मा साध्यत इत्याह कोह्येवेति कोह्येवान्यादात्मनि नस्यादयमेव ह्येवानंदः प्राणिति चापानिति
चेति इत्यस्तित्ववक्तृपपत्याश्रुतिरेवातंसंसार ३४ आत्मनि कार्यकारणसंघाते अयं चिद्रूपानंद आत्मा
यदि न स्यात् तर्हि कोह्येव पुरुषः अन्यात् प्राणनं दिव्यापारं कुर्यात् जडप्रवृत्तेश्चेतनपूर्वकत्वात् जीवनस्या
नंदहेतुकत्वाच्चेत्यर्थः अत एव ह्येवानंदः परमात्मा जीवभावापन्नः प्राणिति चापानिति चेति इति एवं हेतु
त्वेनयस्यास्तित्वमुपपत्या एवाते तिरीयकी श्रुतिः वक्ति तमित्यर्थः ३५ ऐतरेयकश्रुतिर्हि भगवती आत्मा
वा इदमेक एवाग्र आसीदित्यद्वितीयं च प्रश्नोपक्रम्य तस्याद्वितीयत्वसिद्धये स ईक्षतेत्यादिना ईक्षण
तदनंतरं पूर्वकं तत्र एव लोकसृष्टिमुक्त्वा ततः स ईक्षतेमे न्वित्यादिना कार्यकरणदेवतानां सृष्टिमुक्त्वा ततो वैरा
ज्यार्थं तासां देवतानां अशनायापिपासादिमत्संसारार्णवपतनं दर्शयित्वा ततोशनायादिनिवृत्तये अ
दि न्नमेभ्यः सृजा इत्यानां अन्नसृष्टिमुक्त्वा तदनुविचार्यायान्नस्ये वृतदन्नं प्रति भोक्तृत्वप्रदर्श्य सृष्टानां
तेषां कार्यकरणदेवतानामीश्वरप्रवेशं विना स्वस्वकार्ये असमर्थत्वेन मूर्द्धसीमाविदारणेनईश्वरस्यत
त्प्रवेशमुक्त्वा पुनस्तत्र प्रविश्य तादात्म्याभिमानेन संसरतो जीवरूपमापन्नस्य परमेश्वरस्यानंतपूर्वज
न्मकृतपुण्यपुंजपरिपाकवशाद्विविदिषायां सत्यां यद्विवाचाभिव्याहृतमित्यादिना वागादीनामात्मत्वनिरा
करणपूर्वकं अथ कोहमित्यात्मविचारमुपक्रम्य तस्य त्रयः आवस्थात्रयः स्वप्ना इत्यवस्थात्रयस्य मिथ्यात्व
मुक्त्वा स एव पुरुषमित्यनेन वागादिभ्यो वस्थात्रयाच्च विविक्तं तत्सकलसाक्षिणं चिन्मात्रमादाय ब्रह्मतत

ब्रैकान्तसो कपालं नि ऽनुसरते

३ आत्मासा ततर्हीत वारितं करोति

छ०टि
३१

केतोराशंकायां यथासोम्य मधुमधुकृत इत्यादिना मधुकरैर्मधुत्वेन समाहृतनानावृक्षरससमुदा
यवद्विवेक्तुमशक्यत्वेन सुषुप्त्यादौ प्राप्तमपि ब्रह्म न ज्ञायत इति निरस्य तदेव तत्त्वमुपदिश्य १ ननु
सुषुप्त्यादौ कारणाभावादविज्ञानं उत्थितास्तु ब्रह्मणो वयमुत्थिता इति कस्मान्न जानीयुरित्याशंका
यां इमाः सोम्य नद्य इत्यादिना यथा जलधरैरंभोधित आकृष्य विसृष्टानां नदीनां रसान्यत्वेन समु
द्रादागमनं दुर्ज्ञानं एवं ब्रह्मण उत्थितानां संसारिणां तद्वैलक्षण्यात्तदात्मनावस्थायोत्थितावय
मिति न ज्ञानमिति परिहारेण पुनस्तदेवोपदिश्य २ तथा सुषुप्तौ जीवस्य कारणभावापत्तौ समुद्र

ब्रह्मरूप
प्रासौ

२s

वीच्यादिवन्नाशशंकायां अस्य सोम्य महतो वृक्षस्येत्यादिना यथा वृक्षस्य परस्यादिना उच्छेदे रसस्रा
वित्वात् सजीवत्वं तथा सुषुप्ते देहेपि लोहितदर्शनात् न जीवनाश इति परिहारेण प्रागुक्तमेवार्थं।
स्थापिते ३ पुनः कथं सूक्ष्माद्ब्रह्मणः स्थूलजगदुत्पत्तिरिति शंकां न्यग्रोधफलमत आहरेत्या
दिना वटधानांतर्गतसूक्ष्मरूपात् वटोत्पत्तिवत् जगदुत्पत्तिसंभवेन निराकृत्य पुनस्तमेवार्थं

स्त

स्थापिते ४ पुनर्जगन्मूलकारणं ब्रह्म किमिति नोपलभ्यत इति संशये लवणमेतदुदके वधायेत्यादिना
उदकप्रक्षिप्तलवणघनस्य दर्शनस्पर्शनाभ्यामनुपलंभेपि रसनात् लवणसद्भावनिश्चयवत् चक्षुरा
द्यदृश्यमपि ब्रह्म कार्यलिंगादस्तीत्युक्त्वा तदेवोपदिष्टं ५ ततः ब्रह्मसाक्षात्कारे क उपाय इत्याशंकायां
यथा सोम्य पुरुषं गंधारेभ्य इत्यादिना गंधारदेशाद्दस्युभिश्चौरैर्निहितस्य बद्धचक्षुषः पुरुषस्यानेन

न

कः इति वह्नं त्वा प्युपपद्यते इतीयं विदुस्तमित्यर्थः २६ तथा च भगवती छांदोग्यश्रुतिः उद्दालकः श्वेतकेतुं संवा
दमुखेन उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति एकविज्ञानेन सर्वविज्ञानं
प्रतिज्ञाय तदेव कथं नु भगवः स आदेशो भवतीत्याशंकापूर्वकं यथा सोम्यैकेन मृत्पिंडेन सर्वं मृन्मयं
विज्ञातं स्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिना दृष्टांते रूपपाद्य ततो दार्ष्टांतिकं प्रपंच त्या
यितुं सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति सजातीयविजातीयस्वगतभेदशून्यं सद्वस्तु उप
क्रम्य तद्धैक आहुरित्यसद्वादमाशंक्य कथमसतः सज्जायेतेति तं प्रतिविध्य सतरूपस्य ब्रह्मणो जडवि
जातीयभेदाभावमुपपादयितुं तदैक्षत बहु स्यां प्रजायेयेत्यादिना वियदादेः सर्वस्य जडस्य तत एव सृष्टिमु
क्त्वा सजातीयभेदनिराकरणाय तस्मिन् जीवरूपेण प्रवेशं चाभिधाय त्रिवृत्करणपूर्वकं नामरूपसृ
ष्टिं चोक्त्वा ततो ब्रह्मणः स्वकार्याकाशादिनो भेदव्यावृत्तये यदग्ने रोहितं रूपमित्यादिना वियदादेः सर्व
स्य जगतो मिथ्यात्वमुक्त्वा ततो देहवाक्प्राणमनसामन्नादिकार्यत्वेनानात्मत्वमुक्त्वा स य एषोऽणि
मैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसीत्यादेनाश्वेतकेतुद्वारीकृत्य मुमुक्षूणां जीवानामात्म
त्वेन सदद्वितीयमिति सूक्ष्मं सर्वात्मकं परमार्थसत्यं ब्रह्म तत्र तदाशंकानिराकरणपूर्वकं नवकृत्वा पुनः
पुनरुपदिदेश तथा हि प्रयंतो वाङ्मनसीत्यादिना सुषुप्त्युत्क्रांत्याद्यवस्थासु ये न रूपेन जीवः संपद्य
ते तद्ब्रह्म तत्त्वमसीति पित्रोपदिष्टे सुषुप्तौ सत्संपन्नाः प्रजास्तद् ब्रह्मात्मत्वं किमिति न विदुरिति श्वेत

असत् भेदशून्यं सद्वस्तु

अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि

हृ०रि ३२

नित्यं नाशरहितं नजीवो म्रियत इति श्रुतेः विभुं सर्वव्यापकं आत्मेति श्रुतेः आद्यं जगतो निमित्तो
पादानकारणं तदैक्षत बहुस्यां प्रजायेयेति श्रुतेः एवंभूतं यं विद्वांसाम्नामंते साम्नोपनिषदि पिता उद्दालक ना
मर्षिः आत्मसुताय स्वपुत्राय श्वेतकेतुनाम्ने हे श्वेतकेतो तत्त्वमसीति उक्तरूपं ब्रह्म भवसि इत्ये
वं प्राह प्रकर्षेण पुनः पुनराह उपदिष्टवान् तमीड इत्यर्थः २८ बृहदारण्यके मूर्तामूर्तब्राह्मणे द्वे वाव ब्र
ह्मणो रूपे मूर्तं चामूर्तं चेत्युपक्रम्य अनंतरं च तदेतन्मूर्तं यदन्यद्वायोश्चांतरिक्षाच्चेति मूर्तपदं व्याख्या
य तदनु अथामूर्तं वायुश्चांतरिक्षं चेत्यमूर्तपदं व्याख्याय ततः यथाक्रमं अनित्यनित्यपरिछिन्नव्या
२६
पकप्रत्यक्षपरोक्षरूपेण तद्रूपद्वयं प्रदर्श्य ततः समष्टिव्यष्ट्यात्मकस्थूलसूक्ष्मशरीरद्वयं च मूर्ता
मूर्तात्मकं पंचभूतकार्यत्वेन प्रदर्श्य आरोपं प्रपंच्य अंते तद्रूपद्वयमेवोदितं अथात आदेशो नेति ने
निरा
तीति नह्येतस्मादिति नेति नेतीति अपवादवाक्यस्य चायमर्थः अथ ब्रह्मणो रूपद्वयनिरूपणानंतरम
तः यतो रूपि ब्रह्म निरूपयितव्यं तदर्थमेव रूपद्वयनिरूपणं न त्वन्यहेतोः आदेश उपदेशः ब्रह्मणः
मूर्तामूर्तयोः
क्रियत इति शेषः कथं नेति नेतीति इति शब्दो प्रकृतप्रत्यासन्नादिसन्निधापयति मूर्तामूर्ते तद्दुष्यलिंगपुरुषपरो य
स्यापि
थाक्रमं द्वावेव नञ्पदद्वयनिषेध्यसमर्पकौ तयोरेव प्रकृतत्वात् विशेष्यत्वे न ब्रह्मस्तु विशेषणत्वात् प्रकृ
तत्वेऽपि निषेध्यत्वेन संबंधः तथा च नञ्द्वयेन उक्तरूपद्वयनिषेधेन ब्रह्मोपदिश्यते ननु कथं अनेन
ब्रह्मोपदिश्यते रूपद्वयनिषेधमात्रस्यैव प्रतीतेः तत्राह नह्येतस्मात् निषेधरूपादुपदेशात् अन्य उपदेशो

वंधमोक्षकगंधारोपदेशवत् आचार्यकृतादुपदेशात्ब्रह्मसाक्षात्कारोऽविद्यानिवृत्तिश्चेत्युक्तां तदेवोपदि
ष्टं ६ ततः सविद्वान् केनप्रकारेण ब्रह्म संपद्यत इति अपेक्षायां पुरुषं सोम्योतोपतापिनमित्यादिना मनआदे
र्लये सति ज्ञानदीपप्रकाशितं ब्रह्मैव प्रतिपद्यते नार्चिरादिकमपेक्षते अविद्वांस्तु देहांतरं गृह्णातीत्युक्तं
तदेवोपदिदेश ७ तदनु यदि म्रियमाणो मोक्ष्यमाणश्च तदा ब्रह्म संपद्यते तर्हि अविद्वान्विद्वानपि किमि
ति नावर्तत इत्याशंकायां पुरुषं सोम्योत हस्तगृहीतमानयंतीत्यादिना तप्तपरशुं गृह्णतोः स्तेनोऽस्ते
नयोस्तप्तपरशुकरणतलसंयोगाविशेषेऽपि सत्यव्यवहितहस्ततलत्वादस्तेनो न दह्यते स्तेनस्तु दह्यते एव
मंतकाले विद्वदविदुषोः समानायामपि तत्संपत्तौ सत्यब्रह्माभिसंधिः पुनर्न देहं गृह्णाति अनृतदेहाद्या
त्मबुद्धिस्तु पुनः शरीरमुपादत्त इति परदारपूर्वकं तदेव तत्त्वमसीत्युपदिदेश ८ स्वगतभेदस्तु ब्रह्म
णि निरवयवे निर्धर्मके न संभवतीति श्रुत्यापेक्षितः एवं छांदोग्यश्रुत्या भगवत्या सानुक्रोशं क्रमेणत्वा
द्वितीयो नवभिः पर्यायैः सन्मात्रप्रत्यगभिन्नो विभुः प्रतिपादितस्तमिदानीं स्तौति सत्तामा[illegible]मिति स
त्तामात्रं केवलविज्ञानमजं सत् सूक्ष्मं नितांतं तत्त्वमसीत्यात्मसुताय साम्नामंते प्राह पिता यं विभुमाद्यं
ते संसारः ३७ सत्तामात्रमस्तीति प्रत्ययवेद्यं सदेवेति श्रुतेः केवलविज्ञानं विषयनिर्मुक्तं चिद्रूपं वाचा
रंभणं मिथ्यादिश्रुत्या विषयस्य मिथ्यात्वात् तदैक्षतेति श्रुतेश्च नह्यचिद्रूपस्येक्षणं संभवति अजं जन्म
रहितं अग्रे आसीदिति श्रुतेः सत्सत्यं तत्सत्यमिति श्रुतेः सूक्ष्मं इंद्रियाद्यविषयं स य एषोऽणिमेति श्रुतेः

ह० रि ३३ अनुज्ञां प्राप्य याज्ञवल्क्यं पप्रछ उत्तरदाने अवाच्यवचनं नाम निग्रहस्थानं तदज्ञाने च अप्रतिभा नाम निग्रहस्था
नं इति उभयथा याज्ञवल्क्यस्य पराजयं मन्वाना हे याज्ञवल्क्य सर्वमिदं जगद्भूतं भवच्च भविष्यच्च यस्मिन्न्याकृताकाशे
वर्तते सोऽव्याकृताकाशः कुत्राधिस्त इति याज्ञवल्क्यश्च तस्याभिप्रायं ज्ञात्वा एकैकदोषद्वयं परिहरन्नाह एतद्वै
तदक्षरं गार्गि ब्राह्मणा अभिवदंति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमित्यादि ब्राह्मणा अभिवदंतीत्यनेनास्य
प ४ अवाच्यवचनदोषः परिहृतः स्थौल्यादिसकलधर्मरहिताक्षरकथनेनाप्रतिभा च परिहृता ततो यावान्नितरसकल
निषेधमात्राद्क्षरसिद्धिरिति तस्यासत्वशंकायां सकलनिषेधाव [illegible] धित्वेन न ततसत्वमभि
२७ प्रेत्य एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठत इत्यादिना द्यावापृथिव्यौ निमेषादिकालश्च नद्यः
समुद्रा देवाः पितरश्चाक्षरस्य प्रशासने वर्तंते सकलमर्यादाविधारकत्वेन अक्षरसत्वमुक्त्वा यो वा एतदक्षरं गा
अस्मात्के कात्यते सोऽकृपण र्ग्यविदित्वेत्यादिना च यद्ज्ञाना संसारकार्पण्यं यज्ज्ञानाच्च तन्निवृत्तिरस्ति तदक्षरमित्युक्त्वा कुत स्तर्हि तन्नानुभू
यत इत्याशंकायां दृष्ट्याद्यविषयत्वेऽपि सर्वसाधकत्वेन स्वयंभासमानं तदस्तीति दृष्टांतरैर्निषेधयन् अदृष्टं द्र
ष्ट्टनान्यदतोऽस्ति द्रष्ट्ट इत्यादिना अक्षरसद्भावं गार्गिं प्रति प्रसाधयामासेति तदक्षरं ब्राह्मणेषु प्रसिद्धं तत्वं स्तौति
ओतं प्रोतमिति ओतं प्रोतं यत्र च सर्वं गगनांतं यो स्थूलानण्वादिषु सिद्धोऽक्षरसंज्ञः ज्ञाता तोऽन्योऽनेत्युपलभ्यो
न च वेद्यस्तं संसार० ३९ गगनांतमव्याकृताकाशपर्यंतं सर्वमिदं जगत् यत्र विह्रो वोतं प्रोतं च तंतुषु पटवत्
कल्पितं इत्यर्थः यश्चास्थूलानण्वादिषु अस्थूलमनण्व ह्रस्वमदीर्घमित्यादिवाक्येषु अक्षरसंज्ञः नाशरहितया त
सर्वव्यापकत्वेन चाऽक्षरे इति संज्ञा यस्य स सिद्धः प्रसिद्धः सर्वेष्वपि वेदेषु अतोऽक्षराद [illegible] ज्ञाता नास्ति सर्वस्य तत्

नास्ति ब्रह्मणो निर्विशेषत्वेन विधिशब्दागोचरत्वादित्यर्थः विधिः श्रोतव्यादिः ननु तर्हि ब्रह्म नास्तीति प्राप्तं
तत्राह अन्यत्परमस्तीति निरवधिकनिषेधायोगात् मूर्तामूर्तरूपद्वयनिषेधावधिभूतमन्यद्रूपद्वयव्यति
रिक्तं ब्रह्मास्तीति गम्यत इत्यर्थः अथवा नेति इति वीप्सातयाच यद्यद्विषयत्वेन प्राप्तं तत्सर्वं नेति नेतीति
निषेध्यते शेषं पूर्ववत् इत्थं विषयत्वेन प्राप्तं सर्वं निषिध्य निर्विशेषो अविषयः प्रत्यगभिन्नो यो विष्णुः
मूर्तामूर्तब्राह्मणे प्रतिपादितस्तमिदानीं स्तौति मूर्तामूर्त इति मूर्तामूर्ते पूर्वमयोह्याद्यसमाधौ दृश्यं सर्वं
नेतिच नेतीति विहाय चैतन्यांशे स्वात्मनि संतं च विदुर्यतं संसार २८ समाधौ समाधीयते चित्तमस्मि
न्निति समाधिर्विष्णुः चैतन्यांशे चैतन्यमेवांश इवांशः जडांशपरित्यागे अवशिष्यमाणं चिन्मात्रमित्यर्थः त
स्मिन्स्वात्मनि प्रत्यगभिन्ने विष्णौ आरोपिते ये मूर्तामूर्ते पंचभूतात्मके ते नेति नेतीति अपोह्य निषिध्य नेति नेती
ति वाक्यस्यार्थांतरमाह अथेत्यादिना अथशब्दः पक्षांतरे अथवेत्यर्थः नेति नेतीति वीप्सातया दृश्यं सर्वं विहा
य दृश्यत्वेन प्राप्तं सर्वं निषिध्येत्यर्थः एवमेतं निषेधावधिभूतत्वेन संतं विष्णुमात्मानं यं विदुः चकारात्पूर्वोक्तसत्यादि
वाक्येन विधिमुखेन च यं विदुरित्यर्थः तदुक्तं सूत्रकारेण प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय इति प्र

पी

कृतं यदेतावत्त्वं रूपेयत्तास्ति रूपद्वयमित्यर्थः तदेव नेति नेतीति वाक्ये प्रतिषेधति न तु ब्रह्मेत्यर्थः हि यस्मात्ततः
परं च भूयः पुनर्ब्रवीति अन्यत्परमस्तीति तस्माद्रूपद्वयस्यैव निषेधो न ब्रह्मण इति सूत्रार्थः २९ बृहदारण्य
के श्रूयते याज्ञवल्क्येनाश्वलकहोलादीनां पराजये गार्गी नाम ब्रह्मविदुषी काचित् ब्राह्मणी आगत्य ब्राह्मणेभ्यो

वं२

६०रि
२४

रितिचेत् न स्वतो विरुद्धयोर्द्वयोरूपाधितोपि पारमार्थिक एकत्र संबंधानुपपत्तेः नहि स्वतो धवले स्फटिकेज
पाकुसुमोपाधिवशात्प्रतीयमानो रक्तिमा सापारमार्थिको दृश्यते न वा सूर्यतमसोः परमार्थसंबंधघटकः क
श्चिदुपाधिरस्ति तदुक्तं सूत्रकारेण न स्थानतोपि परस्योभयलिंगं सर्वत्र हि स्थानतोपि उपाधिद्वारापि परस्य ब्रह्म
णः उभयलिंगत्वं निष्प्रपंचसप्रपंचोभयरूपत्वं न संभवति उक्त उक्तेरेव सर्ववेदांतेषु अशब्दमस्पर्शमस्थूलमनणु
यत् तदद्रेश्यमग्राह्यं अदृश्ये अनात्म्ये निरुक्ते अदृश्यमव्यवहार्यं स वा एष महानज आत्माजरोमरः यतो
वाचो निवर्तंते स एष नेति नेत्यात्मा अथात आदेशो नेति नेति यत्र नान्यत्पश्यति यत्रत्वस्य सर्वमात्मैवाभूत्तद् विउछ
२८
त्यादिषु श्रुतिषु सर्वत्र निष्प्रपंचब्रह्मण एव श्रुतत्वादिति सूत्रार्थः अपरमार्थतस्तु परस्परविरुद्धमपि रूपद्वयं
एकत्र भवत्येव स्फटिकादौ दर्शनात् नन्वन्यतरमिथ्यात्वे सप्रपंचश्रुति अनुरोधेन निःप्रपंचस्यैवारोपि
तत्वं किं न स्यादिति चेन्न तस्य प्रतिवेदांतमुपक्रमादिभिः षड्विधलिंगैः तात्पर्येणावगम्यमानत्वात् द्वे
वाव ब्रह्मणो रूपे इति सप्रपंचत्वं प्रपंच्य नेति नेतीति निषेधात् सप्रपंचश्रुतेः निषेध्यसमर्पकत्वेन निषे
धश्रुतिशेषत्वावगमाच्च ननु किमर्थं सप्रपंचत्वं ब्रह्मण उक्तानिषिध्यते प्रक्षालनाद्धि पंकस्य दूरा
स दस्पर्शनं वरमिति न्यायेन ब्रह्मणः प्रपंचसंबंधावचनस्यैव युक्तत्वादिति चेत् शृणु तर्हि श्रुतेरभि
प्रायं एकमेवाद्वितीयं ब्रह्मेत्युक्ते सति आकाशादौ द्वितीये सति कथमद्वितीयं ब्रह्मण इत्याशंका जा
यते अतस्तन्निवृत्त्यर्थं ब्रह्मण एवोपादानत्वं वियदादि सर्वप्रपंचोत्पत्तिकथने न कार्यस्योपादानादन्य
यस्यधर्मीश्र्हा वरं तस्यानिरीहता ४

स्यान्यप्रतिषेधेनउपलभ्य तालव्यः ननु विषयतयावेद्यः अविज्ञातंविज्ञा॰ नान्यदतोऽस्ति विज्ञातृ इति श्रु
तेः तत्कथमित्यर्थः ३९ ननु प्रत्यक्षादिप्रमाणैः सिद्धे द्वैते उपलभ्यमाने कथं इतरप्रतिषेधेनोपलभ्यं ब्रह्मेत्या
शंक्याह तावदिति तावत्सर्वं सत्यमिवाभाति यदेतत् यावत्सोऽस्मीत्यात्मनि योऽज्ञो नहि दृष्टः दृष्टे तस्मिन्सर्वमस
त्यं भवतीदं तत्संसारधीः ४० यावत् यदा आत्मनि कार्यकारणसंघाते यः ज्ञप्तिद्रष्टातुः साक्षित्वेन वर्तते स
यावत् ब्रह्मास्मीति ब्रह्मतया न दृष्टः नावलोकितः तावदेव यदेतत् दृश्यते जगत् इदं सर्वं भ्रान्त्या सत्यमिवा
भाति प्रबोधात्पूर्वं स्वप्नवत् तस्मिन्प्रत्यगभिन्ने ब्रह्मणि दृष्टे सर्वमिदं ग्राह्यं आत्ममात्रमभूत्तदा केन करणेन कं विष
यं पश्येत् न किंचिदपि सर्वस्यात्मत्वात् तथा वियदादि अन्तरं कर्तृत्वादिकं च असत्यं भवति पूर्वमप्यसत्यमेव तत्
तदा असत्यमिति ज्ञातं भवति बोधानन्तरं स्वप्नवदित्यर्थः यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येदित्यादि
श्रुतेः यत्र विद्यावस्थायां अस्याधिकारिणः सर्वं जगत् आत्मैवाभूत विद्यया आत्ममात्रतया ज्ञातमभूत्तदा के
न करणेन कं विषयं पश्येत् न किंचिदपि सर्वस्यात्मत्वेन तया ज्ञातृज्ञानज्ञेयानामभावादित्यर्थः प्रत्यक्षादिप्र मा
विषयव्यवहार माणानां व्यावहारिकविषयत्वेन तद्विषयप्रपंचस्य निषेधमुखेन तात्त्विकप्रमाणभूतया श्रुत्या ब्रह्मोपल
ब्धुं शक्यत इति भावः ननु सत्यकामः सत्यसंकल्पः सर्वगंधः सर्वरसः इत्यादौ ब्रह्मणः सप्रपंचत्वस्यापि
श्रुतिसिद्धत्वात्कथं निःप्रपंचवाक्येन तन्निषेधः न च परमार्थतो ब्रह्मणः सप्रपंचनिःप्रपंचोभयरूपत्वं
परस्परविरोधेन वक्तुं अशक्यमिति वाच्यं स्वतो निःप्रपंचस्य ब्रह्मणः पृथिव्याद्युपाधिनैव सप्रपंचत्वोपपत्ति प

प्राणायाम

ह० रि ३५

नि च आत्मयोगग्रंथे योगविंशे उक्तानि देहनादौ विरक्तिः यम इह नियमः [illegible]त्वेनुरक्तिः बाह्योदासीन्य
मेवासनं अत्र नियति स्वक्तराणी मृग्यार्थात् प्रत्याहारः स्वबुद्धेर्विषयमुखता धारणात्मनि स्थाध्यानं ब्रह्मह वि
मस्मीति दृगनन्यता समाहात्मसंवित्समाधिरिति तैः काष्ठस्थानीयैः उज्वलितो योगज्ञानमयोग्निः तत्र अथ
वा अपरियक्कचित्तस्य पतंजलिना सूत्रितानि प्रसिद्धान्येव यमनियमादीनि योगाष्टांगानि तैरुज्वलितः प्रका
शितो योज्ञानमयोग्निः तस्मिन्नित्यर्थः तानि च सूत्राणी माति अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा य
माः शौचसंतोषतपःस्वाध्यायईश्वरप्रणिधानानि नियमाः स्वाध्यायः प्रणवजपः ईश्वरप्रणिधानं ईश्वरभ
क्तिः स्थिरसुखमासनं याहृशेन देहस्थापनेन यस्य पुरुषस्यावयवव्यथानुत्पत्तिलक्षणं सुखं देहचलनाराहि
त्यलक्षणं स्थैर्यं च संपद्यते तदेव तस्य पद्मकस्वस्तिकाद्यन्यतमं सुखमासनमित्यर्थः तस्मिन्सति श्वासप्र
श्वासयोर्गतिविच्छेदः प्राणायामः आसने दृढे सति दशविंशतित्रिंशदादिक्रमेण प्रणवजपैः प्रतिपक्षं प्रति
मासं स्वाभाविकवायुगतिविच्छेदः प्राणायामः इत्यर्थः स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेंद्रियाणां प्र
त्याहारः इंद्रियाणां शब्दस्पर्शादिस्वस्वविषयैरसंप्रयोगे निरुद्धचित्तरूपानुकार इव यत्तन्मीमवस्थानं सप्र
त्याहार इत्यर्थः देशबंधश्चित्तस्य धारणा देशे आधारादौ आत्मनि वा चित्तस्य स्थापनं धारणेत्यर्थः तत्र प्रत्ययैक
तानता ध्यानं तत्र आत्मादौ प्रत्ययसान्तत्यं ध्यानं इत्यर्थः तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ध्यान
मेव ध्यातृध्यानेविहाय ध्येयैकगोचरं सत्समाधिरित्युच्यते तदार्थमस्वरूपं[illegible]विषय

२३

त्रानवस्थानेनब्रह्मणोपलादस्यानमुक्तानंतरं नेहनानास्तिकिंचनेत्यादिवाक्यैः [illegible]चत्वमुक्त्वा [illegible]निषेध एक
मेवाद्वितीयं ब्रह्मेत्येतस्मात्स्थितं भवति अन्यथा ब्रह्मणः सद्वितीयवाक्यैः सप्रपंचत्वमनुक्त्वा प्रथमं तत एव नेहनानास्ती
ति निषेधेऽपि निषिध्यमानघटस्यान्यत्र सत्त्वः तत् अन्यत्र प्रपंचत्वाशंका स्यादिति [illegible] सप्रपंचब्रह्मोपास
नं तु वाच्यं धेनुमुपासीतेत्यादिवदारोपितप्रपंचविषयत्वेनाप्युपपद्यते न चैवं निःप्रपंचब्रह्मण आरोपितत्वेन
उपासनाविषयत्वं किं न स्यादिति वाच्यं तस्यानुपास्यत्वात् तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इत्युपास्यत्व
निषेधात् निःप्रपंचवाक्येषु उपासनाविध्यश्रवणात् आरोपितरूपेणैवोपासनोपपत्तेः अनिषेधे तात्पर्येण प्रपं
च निषेधानुपपत्तेश्च निःप्रपंचस्यैव परमार्थत्वं सूत्रकारेणाप्युक्तं अरूपवदेव हि तत्प्रधानत्वादिति अरूपवदेव
हि ब्रह्म परमार्थतो भवितुमर्हति सर्वासां श्रुतीनामुपक्रमादिभिस्तत्प्रधानत्वात् निष्प्रपंचब्रह्मपरत्वस्यैव दर्श
नादिति सूत्रार्थः तस्मात्परमार्थतो निष्प्रपंचमेव ब्रह्मेति अलं संग्रहव्याख्याने अतिविस्तरेण ४० ननु ए
वं सहस्रशः प्रतिपादितेऽपि तत्त्वे रागादिदोषविनिर्मुक्ते आत्मा नोपलभ्यते तं कथं परमात्मा स्फीति साक्षात्कु
र्यादित्याशंक्याह रागामुक्तमिति रागामुक्तं लोहयुक्तं हेम यथाग्नौ योगाष्टांगेरुज्वलितज्ञानमयाग्नौ दग्ध्वा
त्मानं ज्ञेयपरिशिष्टं च विदुर्यं तं संसारः ४१ रागामुक्तं रागादिकलुषीकृतं आत्मानं दग्ध्वा प्रताप्य विशेषपरिशि
ष्टं च तं चिदात्मानं यं विदुरिति संबंधः कदग्ध्वेत्याकांक्षायामाह योगेति योगाष्टांगेरुज्वलितज्ञानमयाग्नौ योगः
प्रत्यग्ब्रह्मणोरैक्यं तत् प्राप्तौ साधनभूतैरष्टांगैः निर्गुणध्यानाद्यैर्यमनियमादिभि[illegible]भिरंगैर्निर्गुणो योगः अष्टांग

द०रि
३६

गाभोरसभूतं एषहि नाऽगानां हिरसइति श्रुतेः देहाद्यनात्मत्यागेनपरि[illegible]चिदानंदरूपमित्यर्थः इमं
मां सदा भक्त्या स्तौति प्रत्यगभिन्नत्वेन स्तौतिइत्यभिप्रायेण विष्णुः पायादिति संबंधः तमीडे ४३ इदानीं स्तोत्र
पाठकानां स्तोत्रार्थमजानतां पाठमात्रादेव विष्णुलोकप्राप्त्या क्रममुक्तिमेतत्स्तोत्रार्थं जानातामिहैव परिपू
र्ण परमानंदचित्प्रकाशविष्णुरूपेणावस्थानरूपमुक्तिं च फलं दर्शयन्स्तोत्रमुपसंहरति इत्थमिति इत्थं
ज स्तोत्रं भक्त्येनेड्यं भवभीतिध्वांतार्कं भंभगवत्पादीयमिदं यः विष्णोर्लोकं पठति श्रुणोति व्रजति ज्ञानं ज्ञे
यं स्वात्मनि चाप्नोति मनुष्यः ४४ ॐ यो नरः इत्थमुक्तप्रकारेण इदं स्तोत्रं भक्तानामिहाधिकार इत्याह भक्त
जनेड्यं विष्णोर्भक्तिमद्भिः जनैरीड्यमितियावत् भवभीतिध्वांतार्कं भं संसारदुःखतमश्चंडभास्करं भगव
त्पादीयं सर्वज्ञश्रीशंकरभगवता सकललोकानुजिघृक्षया प्रणीतं पठति उच्चैरुच्चारयति श्रृणोति पठत्सु
सत्सु स्वयं श्रृणोति व्रजति सविष्णोरनंतकल्याणगुणमणिगणसागरस्यानंतलीलाविहारपरवशीकृतभ
क्तलोकस्य शुद्धसत्वरूपस्य सर्वज्ञस्य सर्वशक्तेर्भगवतः परमेश्वरस्य लोकं वैकुंठाख्यं व्रजति गच्छति यो य
एतदर्थपरिज्ञानी पठति सः स्वात्मनि ज्ञानं तत्वसाक्षात्कारं ज्ञेयं तद्विषयं ब्रह्म च मनुष्य एव सन्निहैवाप्नोति प्र
स्वयमेव स्वप्रकाशपरिपूर्णपरमानंद ब्रह्मात्मनावतिष्ठत इत्यर्थः ब्रह्मविद्ब्रह्मैव भवतीत्यादिश्रुते
रिति भावः वाचाययाश्रुतिवचांसि च भेदवादिकोलेयकैर्मलिनतानि विशोधितानि तस्याममुष्य म
यि यद्वचनं मदीयं संमिश्रितं शंकरगुरोर्विबुधाः क्षमंतां १ यस्याङ्घ्रिपातपरतो सकृद्दृष्टिवशाद्भूयोन



३०

प्रत्ययाभावादित्यर्थः एतासां ध्येयः त्वं परार्थसाक्षात्कारस्तारमन्नाग्नेः शोधितेहतंमाह नोदयुरं हे मयथाग्ना

विति अयोमिश्रितंस्वर्णं अग्नेौ प्रताप्य अयो विहाय सुवर्णं यथा गृह्णाति तद्वदित्यर्थः ४१ इदानीं भक्तेः फलविधान

पूर्वकं स्तौति यजिति यंविज्ञान ज्योतिरमाद्यं सुविभांतं हृद्यहै दग्ध्वा कर्मजीद्यं तडिदाभं भक्त्याराध्यैहैव विशंत्या

त्मनिसंतं तंसंसारध्वां० ४२ हृदि हृदये तडिदाभं तडिदिव विद्युद्वत् आभा यस्यासौ भवतितथा सुविभांतं प्रसक्ते नुसु

स्वप्रकाशमानं विज्ञानज्योतिर्वं विज्ञान प्रकाशरूपं न तु जडज्योतिरूपं ज्योतिषां ज्योतिरिति श्रुतेः आद्यं सर्वका

रणं अग्र्यं दग्ध्वा कर्म अग्र्ये द्वगनयज्ञो कोसिउपाधिस्थानानियस्य तत्रह्युपास्यमानपरमेश्वरः प्रसन्नोभव

हृदि तिईडंस्तुत्यं भक्त्याश्रवणादिभिरष्टांगयोगैरुपासनाभिश्चया भक्तिर्भजनं तयायं आराध्यात्मनिस्वस्मि स्वरूप

लहे तिईडं स्तुत्यं ... अन्यस्यप्रदेशस्यासंभवात् तमीडे ४२ इदो

त्यासंतं वर्तमानं इहैवजीवन्नेव देहेविशंति तदात्मानो भवंतीत्यर्थः

नीस्तुतिकर्तुः फलविधानपूर्वकं स्तौति यायादिति यायाद्धक्तं स्वात्मनिसंतं पुरुषोयोभक्त्या स्तौती त्यांगिरसंवि

द्युरिमंमां इत्वात्मानं स्वात्मनि संक्रम्यसदैकस्तं संसार ४३ योविद्युरिमंभक्तं पायाल्रत्नतुलमीडइति सं

वंधः कथंभूतंस्वात्मनिसंतं विद्युरस्मीति अभेदेनवर्तमानं भक्तं स एव मुख्यो भक्तः चतुर्विधाभजंतेमामित्यु

त पक्रम्यज्ञानी त्वात्मैव मे मेमितिस्तुतत्वात् तन्हादिनीचेः सुकृतानां मतान्यायाणा स्वतद्गुरुमयादिदेवान् भज

तियेमाधवनिंदकास्ते पूर्णसदानंदमयोहि विद्युरिति भेददर्शिनां निंदितत्वाच्च केनाभिप्रायेण विद्वांस्तद्

ह्यणेप्रवृतिः तत्राह स्वात्मानं स्वस्वांतः करणं स्वात्मनि स्वस्यस्वरूपभूते मयि संक्रम्य निरुध्य आंगिरसंश्रं

२ यज्ञचानन्स्यु दि भेनवामामुच्यते तदेनरूल नविद्धि नेदंयदिदमु

पश्यते यज्ञ तत्त्वानामुडुगादृशाद्सर्वज्ञैस्तु

ह०रि २७ संसृति कुमार्गमवाप्नुवंति लोकास्तमात्मसुखमग्नमनःप्रचारं केवल्ययोगीगुरुमाभजतांमनेमे
इंदीवरेंद्रमणिसुंदरमिंदिरेशं वंदीकृतेंद्रिरिपुवृंदममंदवीर्य्यं मंदस्मितप्रसर नंदितलोकवृंदं
वंदे दिनेंद्रकुलनंदनरामचंद्रं ३ रक्षोमंडलखंडपंडितमहा वेदंडशुंडालसद्दोर्दंडं निरिखलांडपिंडन
कृतौ श्रेष्ठं तथा मुंडिभिः ध्येयं दंडकमंडलूपकरणैर्ब्रह्मांडभुवंशोद्भवे गंडे कुंडलमंडितं रघुपतिं कोदंडपा
णिंभजे ४ इंदूपलेंद्रमणिसुंदरमिंदुचूडवृंदारवृंदपरिवंदितपादपद्मं आमंदमंदहसितोज्वसदाननें
32 दुं वंदामहे वयममंदमुदाविकेशं ४४ इतिश्रीमत्परमहंसपरिव्राजकाचार्यकैवल्यानंदयोगींद्रपादक
मलभृंगायमानस्वयंप्रकाशाख्ययति विरचिता शंकरभगवत्पादकृत हरिस्तुतिव्याख्या हरितत्वमुक्ता
वली संपूर्णं मीती श्रावण वदि ९ शनिवासरे संवत् १८७९ लिखतं वैष्णव हरीदास वंधोरवरिमध्ये

